अब विवाहमें लग्नसे सास आदियोंका शुभाशुभ फल लिखतेहैं-लग्न देहहै, शुक्र सासहै, सूर्य श्वसुरहै, चंद्रमा मनहै और सप्तमेश स्वमीहै इनमेंसे जो बली होय उसीको सुख होताहै॥२५५॥ सूर्यसे पतिका, चंद्रमासे स्त्रीका, मंगलसे धनका, बुधसे पुत्रोंका, बृहस्पतिसे सुखका, शुक्रसे धर्मका, शनैश्चरसे मकानका शुभाशुभ फल विचारकर कहै ॥ २५६ ॥ यदि उच्चादि स्थानमें ग्रह होंय तो सुख और नीच तथा अस्तके ग्रह होंय तो दुःख होताहै ॥ २५७॥

## अथावश्यके राज्ञां खड्गविवाहः ।

चंद्रपंचांगसंशुद्धौ सौम्यायनविवाहभे ॥
राज्ञो गोधूलिके लग्ने खड्गोद्वाहः प्रशस्यते ॥ २५८ ॥

अब आवश्यकोंमें राजाका खड्गविवाह लिखतेहैं-चंद्रमा और पंचाग शुद्ध होय, उत्तरायण सूर्य होंय, विवाहके नक्षत्र होंय, गोधूली लग्न होय तो राजाओंका खड्ग विवाह श्रेष्ठ कहाहै ॥२५८॥

## अथ हीनजातीनां विवाहे विशेषः ।

अनुक्ततिथिमासर्क्षं संकीर्णानां शुभप्रदम् ॥
विवाहे धनपुत्रायुःप्रीतिसौख्यकरो भवेत् ॥ २५९ ॥

अब हीनजातिओंका विवाहमें विशेष लिखतेहैं-विवाहमें जो तिथि, मास, नक्षत्र नहीं कहेहैं वेही सब तिथ्यादि संकीर्ण जातियोंके विवाहमें शुभदायक तथा धन, पुत्र, आयु, प्रीति और सौख्य कारक होतेहैं ॥ २५९ ॥

## अथ शूद्रादीनां स्त्रियः पुनर्विवाहः ।

शूद्रादीनां विवाहर्क्षे पुनरुद्वहनं स्त्रियाः ॥ रात्रौ कुर्यात्र तत्रास्ततिथिमासादिदूषणम् ॥ २६० ॥ सूर्यभाद्वेद ४ नेत्रा २ ग्नि ३ भू १ चंद्रा १ ऽब्धि ४ रसा ६ ऽग्नयः ३ ॥ भू

१ राम ३ संमितास्तारा गांधर्वादिविवाहके ॥ २६१ ॥
नेष्टाः श्रेष्ठाः क्रमादेतास्त्रियश्च गदिता बुधैः ॥ २६२ ॥

अब शूद्रादि स्त्रियोंके पुनर्विवाह लिखतेहैं—विवाहके नक्षत्रोंमें शूद्रादिकोंकी स्त्रियोंका पुनर्विवाह रात्रिमें करे तो अस्त तथा तिथि मासादिका दूषण नहीं होताहै ॥ २६१ ॥ गांधर्वादि विवाहमें सूर्यके नक्षत्रसे ४ । २ । ३ । १ । १४ । ६ । ३ । १ । ३ ये नक्षत्र स्त्रीके लिये पंडितोंने क्रमसे नेष्ट और श्रेष्ट कहेहैं ॥ २६२ ॥

## अथ विवाहांगकार्यम् ।

कार्यं विवाहकार्यांगं विवाहोदितभे जनैः ॥ विबलं च विधुं हित्वा त्रिषष्ठनवमं दिनम् ॥ २६३ ॥ विशाखां भरणीं चित्रां ज्येष्ठाख्यामश्विनीं शतम् ॥ आर्द्रा चतुष्टयं हित्वा कुर्याद्वैवाहिकं विधिम् ॥ २६४ ॥ हेरंबपूजनं तैलं सकलं चांकुरार्पणम् ॥ भूषणं कंकणाद्यं च वेदिकामंडपादिकम् ॥ २६५ ॥

अब विवाहाङ्गकार्य लिखतेहैं—विवाहोक्त नक्षत्रोंमें विवाहके अंगकार्य शुभ होतेहैं. परन्तु निर्बलचंद्रमा और तिसरे,नौवें, छठे दिनको छोडदेय ॥ २६३ ॥ विशाखा, भरणी, चित्रा, ज्येष्ठा, अश्विनी, शतभिषा, आर्द्रा, पुनर्वसु, पुष्य, आश्लेषा इन नक्षत्रोंको छोडकर अन्य नक्षत्रोंमें विवाहकी विधि करे ॥ २६४ ॥ गणेशपूजन, तैलधारण, अंकुरारोपण, भूषण कंकणादि धारण, वेदिकामंडप बनाना इत्यादि सब कार्य सिद्ध होतेहैं ॥ २६५ ॥

## अथ तैलादिलापने दिनसंख्या ।

मेषादिराशिजातानां कुर्यात्तैलादिलापनम् ॥ शैल७दि १० ग्बाण५ सप्तां ७ ग ६ बाण ५ पंचे ५ षवः५शराः ॥२६६॥

बाणाः ५ शैला ७ स्त्रय ३ श्चैव क्रमात्कैश्चिदितीरितम् ॥ २६७ ॥

अब तैलादिलापनमें दिनसंख्या लिखतेहैं—मेषादि राशिवाले कन्या वरके तैल चढानेके दिनोंकी संख्या क्रमसे जाननी ऐसा किन्ही आचार्योंने कहाहै जैसे मेष राशिवाला मनुष्य विवाहमे सातदिन और वृष राशिवाला दशदिन तैल चढावे इत्यादि सबराशियोंके तैल दिनसंख्या चक्रमें लिखतेहैं— ॥ २६६ ॥ २६७ ॥

मेषादिराशीनां तैलदिनसंख्याचक्रम् ।

| मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कु | मी | राशय |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ७ | १० | ७ | ८ | ६ | २ | ५ | ५ | ५ | ७ | ७ | ३ | दिनसंख्या |

## अथ विवाहवेदिका ।

चतुरास्त्रां करोच्छ्रायां चतुर्हस्तां सुवेदिकाम् ॥ वेश्मनो वामभागे च कुर्यात्स्तंभोपशोभिताम् ॥ २६८ ॥ ऐशान्यां स्थापयेत्स्तभं सिंहादित्रिभगे रवौ ॥ वृश्चिकादित्रिभे वायौ नैर्ऋत्यां कुंभतस्त्रिभे ॥ वृषात्रये तथाऽग्नेय्यां स्तंभखातस्तथैव हि ॥ २६९ ॥

अब विवाहमें वेदिका लिखतेहैं—मकानके वाम भागमें चौकोर हाथभर ऊंची, चारहाथ लंबी और चौडी वेदी बनावे उसको समीपमें खंभसे सुशोभित करे ॥ २६८ ॥ सिंह, कन्या, तुला राशिके सूर्य होय तो ईशान दिशामें खंभको स्थापित करे और वृश्चिक, धनु, मकर राशिके सूर्य होय तो वायव्यदिशामें खंभको गाडे और कुंभ, मीन, मेष राशिके सूर्य होंय तो नैर्ऋत्य दिशामें खंभ गाडे और वृष-मिथुन कर्कके सूर्य हों तो आग्नेय दिशामें खंभ गाडे ॥ २६९ ॥

## अथ विवाहानंतरं मंडपोद्वासनम् ।

मंडपोद्वासनं षष्ठं हित्वा कुर्यात्समेहनि ॥
पंचमे सप्तमे वापि शुभर्क्षे शुभवासरे ॥ २७० ॥
इति श्रीमद्दैवज्ञरावलहरिशंकरसूरिसूनुगणपतिकृते मुहूर्त-
गणपतौ विवाहप्रकरणं पञ्चदशम् ॥ १५ ॥

अब विवाहानन्तर मंडपोद्वासन लिखतेहैं—छठे दिनको छोड़कर समदिनमें अथवा पांचवें सातवें दिन, शुभनक्षत्र और शुभवारमें मंडप सिरावे ॥ २७० ॥

इति श्रीमद्दैवज्ञरावलहरिशंकरसूरिसूनुगणपतिकृते मुहूर्त-
गणपतौ श्रीयुतपंडितवर्यवेणीरामात्मजपंडितराम-
दयालुशर्मकृतभाटीकासमलंकृतं विवाहप्रकरणं
पञ्चदशम् ॥ १५ ॥

---

## अथ वधूप्रवेशप्रकरणम् ।

लग्नादह्नि समे पंचसप्तांके प्राक्च षोडशात् ॥ ततस्त्वापंचमाद्वर्षादोजाहे मासि वत्सरे ॥ १ ॥ यथेच्छं तु ततो वध्वाः प्रवेशः शुभदः स्मृतः ॥ श्रवणद्वितये मूलेऽनुराधारोहिणीमृगे ॥ २ ॥ हस्तत्रये मघापुष्ये त्र्युत्तरे रेवतीद्वये ॥ प्रवेशः शुभदो वध्वाः सोमे शुक्रे गुरौ शनौ ॥ ३ ॥ मध्यो बुधे कुजेर्के तु नेष्टो रिक्तातिथौ तथा ॥ शुभे वर्गे बलोपेते लग्ने चांशे शुभः स्मृतः ॥ ४ ॥

अब वधूप्रवेश लिखतेहैं—विवाहसे सम दिनमें अर्थात् चौथे, छठे, आठवें, दशवें दिन आदि सोलहवें दिनतक और पीछे पांचवर्षके भीतर विषमवर्ष और विषम मासमें ॥ १ ॥ और पांचवें वर्षसे पीछे इच्छानुरूप वधूका प्रवेश शुभदायक कहाहै. श्रवण, धनिष्ठा, मूल, अनुराधा, रोहिणी, मृगशिरा ॥ २ ॥ हस्त, चित्रा,

स्वाति, मघा, पुष्य, तीनों उत्तरा, रेवती, अश्विनी इन नक्षत्रोंमें और चंद्र, शुक्र, बृहस्पति, शनि वारोंमें वधूप्रवेश शुभ होताहै ॥ ३ ॥ वधूप्रवेशमें बुध मध्यम और मंगल, रवि तथा रिक्तातिथि नेष्ट होतीहैं, लग्न और लग्नका नवांश शुभग्रहके बलसे युक्त होय तो वधूप्रवेश शुभ होताहै ॥ ४ ॥

## अथ विवाहोत्तरं प्रथमाब्दे मासविशेषेण वध्वा निवासदोषः ।

उद्वाहात्प्रथमे ज्येष्ठे यदि पत्युर्गृहे वसेत् ॥ पत्युर्ज्येष्ठं तदा हंति पौषे तु श्वशुरं तथा ॥ ५ ॥ श्वश्रूं साऽऽषाढमासे तु चाधिमासे स्वकं पतिम् ॥ आत्मानं तु क्षये मासि तातं तातगृहे मधौ ॥ ६ ॥

इति श्रीमद्दैवज्ञरावलहरिशंकरसूरिसूनुगणपतिकृते मुहूर्तगणपतौ वधूप्रवेशप्रकरणं षोडशम् ॥ १६ ॥

अथ विवाहोत्तर प्रथम वर्षमें मासविशेषसे वधूका निवासदोष लिखतेहैं—यदि विवाहसे प्रथमवार वधू ज्येष्ठ मासमें पतिके घर निवास करे तो पतिके बडे भाईका नाश होताहै और जो पौष मासमें निवास करे तो श्वसुरका ॥ ५ ॥ आषाढ मासमें निवास करे तो सासका, अधिमासमें निवास करे तो अपने पतिका, क्षयमासमें निवास करे तो अपने आत्माका नाश होताहै और जो चैत्रके महीनेमें पिताके घर निवास करे तो पिताका नाश होताहै ॥ ६ ॥

इति श्रीमद्दैवज्ञरावलहरिशंकरसूरिसूनुगणपतिकृते मुहूर्त्तगणपतौ श्रीयुतपंडितजयदेवरामात्मजपंडितरामदयालुशर्म्मकृतभाषाटीकासमलंकृतं वधूप्रवेशप्रकरणं षोडशम् ॥ १६ ॥

## अथ द्विरागमनप्रकरणम् ।

विवाहाद्विषमे वर्षे कुंभमेषालिगे रवौ ॥ बलिन्यर्के विधौ जीवे शुभाहे चाश्विनीमृगे ॥ १ ॥ रेवतीरोहिणीपुष्ये त्र्युत्तरे श्रवणत्रये ॥ हस्तत्रये पुनर्वस्वोस्तथा मूलानुराधयोः ॥ २ ॥ कन्यामीनतुलायुग्मे वृषे प्रोक्तबलान्विते ॥ लग्ने पद्मदलाक्षीणां द्विरागमनमिष्यते ॥ ३ ॥ संमुखे दक्षिणे शुक्रे नो गच्छेत्तु कदाचन ॥ गर्भिणी तु विगर्भा स्यान्नवोढा वंध्यतामियात् ॥ ४ ॥ बालकश्चेद्विपद्येत विगेहादपि चेद्व्रजेत् ॥ ५ ॥

अब द्विरागमन लिखतेहैं–विवाहसे विषम वर्षमें और कुंभ, मेष, वृश्चिक राशिके सूर्यमें तथा सूर्य,चंद्रमा, बृहस्पति बलवान् होय, शुभवार होय, अश्विनी, मृगशिरा ॥ १ ॥ रेवती, रोहिणी, पुष्य, तीनों उत्तरा, श्रवण, धनिष्ठा, शतभिषा, हस्त, चित्रा, स्वाति, पुनर्वसू, मूल, अनुराधा ये नक्षत्र होंय ॥ २ ॥ उक्त बल युक्त कन्या, मीन, तुला, मिथुन, वृष ये लग्नें होंय तो कमलदलनयनी स्त्रियोंका द्विरागमन श्रेष्ठ होताहै ॥ ३ ॥ सम्मुख और दक्षिण शुक्र होय तो कभी यात्रा न करै; यदि सम्मुख और दक्षिण शुक्रमें गर्भवती यात्रा करै तो गर्भ नष्ट होजाताहै और नवीन विवाहकीहुई विना गर्भकी स्त्री यात्रा करै तो वंध्या होजातीहै ॥ ४ ॥ और जो बालकवाली यात्रा करै तो बालक मरजाताहै ॥ ५ ॥

## अथ दीपमालाप्रवेशे दोषापवादः ।

सिंहस्थे वा गुरौ शुक्रे संमुखे संगतेपि वा ॥
शुभो दीपोत्सवे वध्वाः प्रवेशः पतिमंदिरे ॥ ६ ॥

अब दीपमालाके प्रवेशमें दोषापवाद लिखतेहैं–सिंहके बृहस्पति अथवा सम्मुख शुक्र होय तो भी दीपोत्सवके दिन पतिके मंदिरमें वधूका प्रवेश शुभ होताहै ॥ ६ ॥

## अथ प्रतिशुक्रदोषापवादः ।

एकस्मिन्नगरे ग्रामे देशे राजाद्युपद्रवे ॥ दुर्भिक्षे तीर्थयात्रायां नववध्वाः प्रवेशने ॥ ७ ॥ विवाहे न हि दोपाय प्रतिशुक्रस्तथा बुधः ॥ अत्र्यंगिरोवसिष्ठानां वत्सकश्यपयोर्भृगोः ॥ ८ ॥ भरद्वाजमुनेर्गोत्रे प्रतिशुक्रो न दुष्यति ॥ पित्र्यागारे यदि स्त्रीणां स्तनपुष्पोद्गमो भवेत् ॥ ९ ॥ गमनं प्रतिशुक्रेपि प्रशस्तं पतिवेश्मनि ॥ १० ॥

इति श्रीमद्दैवज्ञरावलहरिशंकरसूरिसूनुगणपतिकृते मूहूर्त्तगणपतौ द्विरागमनप्रकरणं सप्तदशम् ॥ १७ ॥

अव प्रतिशुक्रदोषापवाद लिखतेहैं-एकनगर, एकग्राम, एकदेशमे, तथा राजकृत उद्रवमें, दुर्भिक्षमे, तीर्थयात्रामें, नवीन वधूप्रवेशमें॥७॥ विवाहमें सामने शुक्रका दोष नही होताहै. तथा बुधकाभी दोष नहीं होताहै और अत्रि, अंगिरा, वशिष्ठ, वत्स, कश्यप, भरद्वाज इन गोत्रोंमे सामने शुक्रका दोष नही होताहै और यदि पिताके घरमे स्त्रियोंके स्तन निकसै अथवा रजोधर्म होय तोभी सामने शुक्रका दोप नहीं होताहै पतिके घर जानेमे शुभ मानाहै ॥ ८ ॥ ९ ॥ १० ॥

इति श्रीमद्दैवज्ञरावलहरिशंकरसूरिसूनुगणपतिकृते मुहूर्त्तगणपतौ पंडितरामदयालुशर्मकृतभाषाटीकासमलकृतं द्विरागमनप्रकरणं सप्तदशम् ॥ १७ ॥

---

## अथाग्न्याधानप्रकरणम् ।

सौम्यायने विशाखायां कृत्तिकारोहिणीमृगे ॥ त्र्युत्तरे रेवती ज्येष्ठापुष्येऽग्न्याधानमिष्यते ॥ १ ॥ कुजार्काब्जे गुरौ शुक्रे नो नीचास्तंगतेऽरिभे ॥ नो रिक्तायां तिथौ कर्के लग्ने नैव मृगत्रये ॥ २ ॥ अग्न्याधानं प्रकुर्वीत नैदौ लग्नगतेपि च ॥ त्रिकोणेऽपचये केंद्रे सूर्यजीवकुजेंदुषु ॥ ३ ॥ शेषे चोप-

चये शुद्धे रंध्रेग्न्याधानमुत्तमम् ॥ लग्ने जीवे धनुर्गे वा द्यूने ७ खे १० वाऽजगे कुजे ॥ ४ ॥ चंद्रे वा त्रिषडायस्थे सूर्ये वा दीक्षितो भवेत् ॥ ५ ॥

इति श्रीमद्दैवज्ञरावलहरिशंकरसूरिसूनुगणपतिकृते मुहूर्तगणपतावग्न्याधानप्रकरणमष्टादशम् ॥ १८ ॥

अब अग्न्याधान लिखतेहैं—उत्तरायण सूर्यमें और विशाखा, कृत्तिका, रोहिणी, मृगशिर, तीनों उत्तरा, रेवती, ज्येष्ठा, पुष्य इन नक्षत्रोंमें अग्निहोत्र करना शुभ कहाहै ॥ १ ॥ मंगल, सूर्य. चंद्रमा, बृहस्पति, शुक्र ये ग्रह नीचके अथवा अस्तके वा शत्रुग्रहकी राशिके न होंय और रिक्ता तिथिभी नहीं होय तथा कर्क, मकर, कुंभ, मीन ये लग्नेंभी नहीं होंय ॥ २ ॥ लग्नमें चंद्रमा न होय, त्रिकोण ९ । ५ अपचय केंद्र स्थानमें सूर्य, बृहस्पति, मंगल, चंद्रमा होंय ॥ ३ ॥ शेष ग्रह उपचय ३।६।१०।११ में होंय, तथा आठवां स्थान शुद्ध होय तो अग्न्याधान उत्तम होताहै. बृहस्पति लग्नमें होय अथवा धनुराशिका होय और सातवें, दशवें, मेषका मंगल होय ॥ ४ ॥ चंद्रमा अथवा सूर्य तीसरे, छठे, दशवें, ग्यारहवें स्थानमें होंय तो अग्निहोत्रादि यज्ञमें दीक्षा लेनी शुभ होतीहै ॥ ५ ॥

इति श्रीमद्दैवज्ञरावलहरिशंकरसूरिसूनुगणपतिकृते मुहूर्त्तगणपतौपण्डितरामदयालुशर्मकृतभाषाटीकासमलंकृतमग्न्याधानप्रकरणमष्टादशम् ॥ १८ ॥

---

## अथ राजाभिषेकप्रकरणम् ।

उदितेऽब्जे गुरौ शुक्रे विनैत्रे चोत्तरायणे ॥ जन्मेशे चापि कर्मेशे रवौ भौमे बलान्विते ॥ १ ॥ रोहिणीद्वितये पुष्ये ज्येष्ठायां त्र्युत्तरे तथा ॥ रेवतीयुगुले हस्ते चित्रायां श्रवणेपि

च ॥ २ ॥ तिथौ वारे शुभेऽर्केपि कुर्याद्राजाभिषेचनम् ॥ स्थिरे चोपचये लग्ने जन्मतो मस्तकोदये ॥ ३ ॥ शुभैर्युक्तेक्षिते वापि पापदृग्योगवर्जिते ॥ धनकेंद्रत्रिकोणाख्ये रहितैः पापखेचरैः ॥ ४ ॥ सौम्यैरषष्ठगैः सर्वैर्व्ययमृत्युविवर्जितैः ॥ केंद्रत्रिकोणगैः सौम्यैरसौम्यैः षट्त्रिलाभगैः ॥ ५ ॥ सुहृत्स्वर्क्षोच्चगैः खेटैर्नीचारातिभवर्जितैः ॥ राजयोगोचिते लग्ने शुभं राजाभिषेचनम् ॥ ६ ॥

अब राजाभिषेक लिखतेहैं–चंद्रमा, बृहस्पति, शुक्र का उदय होय, चैत्र विना अन्यमास होंय, उत्तरायण सूर्य होय, जन्मेश अथवा दशमेश सूर्य वा मंगल बलवान् होय ॥ १ ॥ रोहिणी, मृगशिर, पुष्य, ज्येष्ठा, तीनों उत्तरा, रेवती, अश्विनी, हस्त, चित्रा, श्रवण इन नक्षत्रोंमें ॥ २ ॥ ॥ शुभ वार शुभ तिथिमें तथा रविवारके दिनभी राज्याभिषेक शुभ होताहै. जन्मलग्नसे तीसरे, छठे, दशवें, ग्यारहवें स्थानकी लग्न होय अथवा स्थिर वा मस्तकोदय लग्न होय अर्थात् मिथुन, कन्या, तुला, वृश्चिक, कुंभ ये लग्नें होंय और शुभग्रहोंसे युक्त वा दृष्ट तथा पापग्रहोंकी दृष्टि और योगसे वर्जित लग्न होय दूसरा स्थान केंद्र १ । ४ । ७ । १० कोण ९ । ५ स्थान, पापग्रहोंसे रहित होय ॥ ३ ॥ ४ ॥ षष्ठस्थानमें शुभग्रह न होंय और बारहवें, आठवें स्थानमें कोई ग्रह न होय, केन्द्र त्रिकोण स्थानमें शुभग्रह होंय और छठे, तीसरे, ग्यारहवें स्थानमें पापग्रह होंय तथा मित्रकी राशि अथवा अपनी राशि वा उच्चराशिके ग्रह होंय, नीचराशि वा शत्रुराशिके न होंय और राजयोगके योग्य लग्न होय तो राजाभिषेक शुभ होताहै ॥ ५ ॥ ६ ॥

## अथ युवराजाभिषेकः ।

युवराजाभिषेकः स्यादभिषेकोक्तभादिषु ॥ ७ ॥

अव युवराजाभिषेक लिखतेहैं—राजाभिषेकमें कहेहुए नक्षत्रादिकोंमें युवराजका अभिषेक शुभ होताहै ॥ ७ ॥

## अथ पुत्राऽभावेऽन्यस्याभिषेचनम् ।

स्वजाते राज्ञि तत्स्थाने पुत्राभावे कुलोद्भवम् ॥
नो चिंत्यास्तिथिवाराद्यास्तत्कालमभिषेचयेत् ॥ ८ ॥

अव पुत्राभावमें अन्यका अभिषेचन लिखतेहैं—राजाके पश्चात् पुत्र गद्दीपर बैठताहै, यदि पुत्र न होय तो अपने कुलके पुरुष को और यदि अपने कुलका पुरुष न मिलै तो अपनी जातिवाले पुरुषको तत्काल राजगद्दीपर बैठायदेवे उस समय तिथि वारादिकोंका कुछभी विचार न करै ॥ ८ ॥

## अथ राजचिह्नधारणम् ।

चामरं छत्रदोलादिद्वीपिसिंहासनादिकम् ॥
पट्टाभिषेकभे सर्वं विदध्याच्छोभनेहनि ॥ ९ ॥
इति श्रीमद्दैवज्ञरावलहरिशंकरसूरिसूनुगणपतिकृते मुहूर्त्तगणपतौ राज्याभिषेकप्रकरणमेकोनविंशम् ॥ १९ ॥

अव राजचिह्नधारण लिखतेहैं—चँवर, छत्र, हिंडोलादि तथा गेंडा अथवा सिहके चमड़ेसे सुशोभित आसनादिको राजाभिषेकोक्त नक्षत्रों तथा शुभवारोंमें धारण करे ॥ ९ ॥

इति श्रीमद्दैवज्ञरावलहरिशंकरसूरिसूनुगणपतिकृते मुहूर्त्तगणपतौ श्रीयुतपंडितवर्यवेणीरामात्मजपंडितरामदयालुशर्मकृतभाषाटीकासमलंकृतं राज्याभिषेकप्रकरणमष्टादशम् ॥ १९ ॥

---

## अथ यात्राप्रकरणम् ।

विज्ञातजन्मनां राज्ञां ज्ञात्वा शुभफलोदयम् ॥
योज्या यात्रा बुधैः शस्तं प्रश्नादज्ञातजन्मनाम् ॥ १ ॥

अब यात्राप्रकरण लिखतेहैं-जिन राजाओंका जन्मपत्र होय उनके जन्म लग्नसे तथा जिन राजाओंका जन्म पत्र न होय उनके प्रश्न लग्नसे सब ग्रहादिकोंका फल विचारकर पंडितलो गायत्राका श्रेष्ठ मुहूर्त्त निश्चय करें ॥ १ ॥

## अथ प्रश्नलग्नाद्यात्रायाः शुभाशुभफलम् ।

जनुषो लग्नराशी वा लग्नगे वा तदीश्वरौ ॥ ताभ्यां चोपचये लग्ने तदा राज्ञां जयो ध्रुवम् ॥ २ ॥ प्रश्नतो लग्नभे शत्रोस्तुर्ये ४ स्ते ७ वा तयोः पती ॥ ताभ्यामुपचयं भं वा जयः स्याद्वैरिसंभवः ॥ ३ ॥ जयो लग्ने स्वसद्वर्गे भवेच्छीर्षोदयेपि वा ॥ शुभयुक्तेक्षिते वापि शुभा यात्रा चरोदये ॥४॥ स्थिरोदये गमो न स्याच्छुभैर्दृष्टे युते शुभः ॥ द्विःस्वभावोदये पापैर्युक्ते वाथ निरीक्षिते ॥ ५ ॥ प्रस्थितोपि निवर्त्तेत निर्जितोरिजनैः पुनः ॥ रम्ये भूमितले दृष्टे श्रुते भोगेल्पवस्तुनि ॥ ६ ॥ अत्यादरेपि वा प्रश्ने जयलाभोपि यास्यताम् ॥ भृगौ लग्ने बुधे तुर्ये ४ सहोत्थे ३ र्के सुते गुरौ ॥ ७ ॥ लाभगे ११ रपरैः शत्रूञ्जित्वाभ्येति नृपो गृहे ॥ लग्ने १ भौमेऽथवा मंदे सुते जीवेथ खे १० रवौ ॥ ८ ॥ लाभे ११ कर्मणि १० वा चंद्रे शुक्रेपि विजयो ध्रुवम् ॥ लग्ने भौमेंदुयुक्ते वा दिनेशतनुजेक्षिते ॥ ९ ॥ चंद्रे वा निधनेऽस्तस्थे भास्करे लग्नवर्त्तिनि ॥ पापैर्वा द्यूनलग्नाष्टहिबुकोपगतैर्ग्रहैः ॥ एभिस्त्रिभिश्च दुर्योगैः प्रष्टुर्भंगो न संशयः ॥ १० ॥ कोणे ५।९ भौमाद्बुधेज्यार्किशुक्रा वेषु चतुर्ष्वपि ॥ एकश्चेद्गमनं न स्यात्सूर्याद्वाकोणके विधौ ॥ ११ ॥ नयेद्वा स्वदिशं सोत्र यः खेटो बलवांस्तयोः ॥ प्रश्ने गम्यदिशाधीशात्पंचमोपि बली ग्रहः ॥१२॥

अब प्रश्नलग्नसे यात्राके शुभाशुभ फल लिखतेहैं—जन्मकी लग्न अथवा राशिही प्रश्नकी लग्न होय अथवा प्रश्नलग्नमें जन्म लग्नेश्वर वा जन्मराशीश्वर होय अथवा जन्म लग्न और जन्मराशिसे उपचय स्थान ३। ६। १०। ११। की लग्न होय तो राजाओंकी निश्चयही जय होतीहै ॥ २ ॥ शत्रुके जन्मकी लग्न वा राशि प्रश्नलग्नसे चौथे वा सातवें स्थानमें होय अथवा शत्रुका जन्मलग्नपति तथा जन्मराशिपति चौथे वा सातवें होय अथवा शत्रुका जन्मलग्न और जन्मराशिसे उपचय ३। ६। १०। ११ स्थानकी लग्न होय तो शत्रुसे विजय होतीहै ॥ ३ ॥ प्रश्न लग्न अपने वर्गमें अथवा शुभग्रहके वर्गमें होय अथवा (शीर्षोदय) मिथुन,कन्या, तुला, वृश्चिक, कुंभ लग्न शुभयुक्त दृष्ट होय तो विजय होतीहै. अथवा शुभग्रहसे युक्त वा दृष्ट चर लग्न होय तो यात्रा शुभ होतीहै ॥ ४ ॥ और जो स्थिर लग्न होय तो यात्रा नहीं होतीहै यदि स्थिरलग्न शुभग्रहोंसे दृष्ट वा युक्त होय तो यात्रा शुभ होतीहै और जो द्विस्वभाव लग्न पापग्रहोंसे युक्त वा दृष्ट होय तो ॥ ५ ॥ जाकरके भी लौट आताहै अथवा शत्रुओंसे हारकर लौट आताहै. यदि प्रश्नलग्नके समय पृथ्वीतल रमणीक होय अथवा शुभ वस्तु देखने सुननेमें आवे अथवा थोडीसी शुभ वस्तुका भोग मिले अथवा अत्यादरके साथ पंडितसे पूछे तो जानेवालोंकी विजय होतीहै, लग्नमें शुक्र होय,चौथे बुध होय, तीसरे सूर्य होय, पांचवें बृहस्पति होय ॥ ६ ॥ ७ ॥ ग्यारहवें स्थानमें अन्य ग्रह होय तो राजा शत्रुओंको जीतकर घर आजावै.लग्नमें मंगल अथवा शनैश्चर होय, पांचवें बृहस्पति होय,दशवें सूर्य होय ॥ ८ ॥ और ग्यारहवें, दशवें स्थानमें शुक्र वा चंद्रमा होय तो निश्चयही विजय होतीहै. यदि लग्न, मंगल वा चंद्रमासे युक्त होय और शनैश्चरसे दृष्ट होय ॥ ९ ॥ चंद्रमा आठवें वा सातवें

स्थानमें स्थित होय, सूर्य लग्नमें वर्तमान होय, पापग्रह सातवें, लग्नमें, आठवें, चौथे स्थानमें स्थित होंय तो पूछनेवालेका यात्रामें निस्संदेह भंग होताहे ये तीन दुष्टयोग हैं ॥ १० ॥ मंगलसे त्रिकोणमें बुध, बृहस्पति, शनैश्चर, शुक्र ये चारों वा इन चारों ग्रहोंमेंसे कोई एक ग्रह होय तो यात्रा नहीं होतीहै अथवा सूर्यसे त्रिकोण ९। ५ में चंद्रमा होय तोभी यात्रा नहीं होतीहै ॥ ११ ॥ और पूर्वोक्त यात्रावरोधक दोनों ग्रहोंमे जो ग्रह बलवान् होय सो अपनी दिशाकी यात्रा करताहै अथवा ( गम्य ) जानेयोग्य दिशाके स्वामीग्रहसे पांचवें स्थानमें जो ग्रह बली होय सो अपनी दिशाकी यात्रा कराताहै ॥ १२ ॥

## अथ संक्रांतिषु यात्राफलम् ।

मेप १ सिंह ५ धनुः ९ संस्थे यात्रा शस्तांशुमालिनि ॥
कुंभे ११ नक्रां १० गना ७ युग्म ३ शुक्रभस्थे २।७ तु
मध्यमा ॥ १३ ॥ कर्कां ४ लि ८ मीनगे १२ ऽर्के तु
यात्रा दीर्घप्रवासदा ॥ १४ ॥

अब संक्रांतिसे यात्राफल लिखतेहैं-मेष, सिंह, धनु राशिपर स्थित सूर्य होंय तो यात्रा शुभ होतीहै और कुंभ, मकर, कन्या, मिथुन और ( शुक्रकी राशि ) वृष, तुला पर सूर्य स्थित होंय तो यात्रा मध्यम होतीहै ॥ १३ ॥ और कर्क, वृश्चिक, मीन राशिके सूर्य होंय तो यात्रा दीर्घकालकी होतीहै ॥ १४ ॥

## अथ दशादिबलवशात्त्रिविधं यात्राफलम् ।

दशादेः सफले पाके यात्रा श्रेष्ठाथ मध्यमा ॥
गोचरादिबले न्यूनफला पंचांगशुद्धितः ॥ १५ ॥

अब दशादिबलवशसे त्रिविध यात्राफल लिखतेहैं-यदि दशान्तर्दशा आदि फलवाली अर्थात् शुभ होंय तो यात्रा श्रेष्ठ होतीहै और

जो गोचरादिका बल होय तो मध्यम होतीहै और यदि पंचांगशुद्धि होय तो न्यून फलवाली होतीहै ॥ १५ ॥

## अथ यात्रायां चंद्रताराितिथ्यादिशुद्धिः।

तारास्त्रिपंचसप्ताद्या रिक्तामापूर्णिमाष्टमीः ॥
शुक्लाद्यां द्वादशीषष्ठ्यौ हित्वा चंद्रबले गमः ॥ १६ ॥

अब यात्रामें चंद्रताराितिथ्यादिशुद्धि लिखतेहैं–तीसरी, पांचवीं, सातवीं, पहिली तारा और रिक्ता, अमावास्या, पूर्णिमा, अष्टमी और शुक्लपक्षकी प्रतिपदा, द्वादशी, षष्ठी तिथि इन सबको त्यागकर चंद्रमाका बल होय तो यात्रा शुभ होतीहै ॥ १६ ॥

## अथ यात्रायां पृथक् तिथिफलानि।

कृष्णा च प्रतिपच्छ्रेष्ठा नो शुक्ला गमनादिषु ॥ द्वितीया कार्यसिद्ध्यै स्यात्तृतीया क्षेमसंपदे ॥ १७ ॥ चतुर्थी क्लेशदा ज्ञेया लाभदा पंचमी तथा ॥ व्याध्यार्त्तिदायिनी षष्ठी सप्तमी भोगभोज्यदा ॥ १८ ॥ रोगदा चाष्टमी ज्ञेया नवमी मृत्युदा सदा ॥ दशमी लाभदा नित्यं हेमदैकादशी स्मृता ॥१९॥ प्राणहृद्द्वादशी प्रोक्ता सर्वसिद्धा त्रयोदशी॥ शुक्ला चतुर्दशी नेष्टा कृष्णपक्षेविशेषतः ॥ २० ॥ पूर्णिमा मध्यमा प्रोक्ता त्याज्यो दर्शस्तु सर्वथा ॥ तिथीनां फलतद्धि ज्ञातव्यं गमने बुधैः ॥ २१ ॥

अब यात्रामें पृथक तिथिफल लिखतेहैं–यात्रादि कार्योंमें कृष्ण पक्षकी प्रतिपदा श्रेष्ठ होतीहै और शुक्लपक्षकी नेष्ट होतीहै, द्वितीया तिथि कार्य सिद्धिकेलिये होतीहै, तृतीया कल्याणपूर्वक संपदाकेलिये होतीहै ॥ १७ ॥ चतुर्थी क्लेशदेनेवाली कहीहै, पंचमी लाभ देनेवाली है, षष्ठी तिथि रोग और दुःखकी देनेवाली है, सप्तमी भोग और भोज्यकी देनेवाली है ॥ १८ ॥ अष्टमी तिथि रोग देनेवाली

है, नवमी तिथि सदैव मृत्यु देनेवाली है, दशमी तिथि नित्य लाभकी देनेवाली है, एकादशी सुवर्णकी देनेवाली है ॥ १९ ॥ द्वादशी तिथि प्राणोंकी हरनेवाली है, त्रयोदशी सर्वसिद्धिकी देनेवाली है, शुक्लपक्षकी चतुर्दशी नेष्ट होतीहै और कृष्णपक्षकी चतुर्दशी विशेष करके नेष्ट होतीहै ॥ २० ॥ और पूर्णमासी मध्यम कहीहै और अमावास्या सर्वथा त्याज्य है यात्रामें पंडितोंको तिथियोंका यह फल अवश्यही विचारना चाहिये ॥ २१ ॥

## अथ यात्रायां शुभाशुभवाराः ।

सत्खेटवासरे चोपचयस्थस्यापि वासरे ॥
यात्रा श्रेष्ठा बुधे मध्या लोके शास्त्रे तु न क्वचित् ॥ २२ ॥

अब यात्रामे शुभवार लिखतेहैं-शुभग्रहके वारमे यात्रा शुभ होतीहै और प्रश्नलग्नसे ( उपचय ) तीसरे, छठे, ग्यारहवें, दशवें घरमे जो ग्रह होय उसके वारमेभी यात्रा श्रेष्ठ होतीहै और बुधवारमें मध्यम होतीहै ऐसा कथन लोकमे है और शास्त्रमें कहीं नहीं लिखाहै ॥ २२ ॥

## अथ वारे कालविशेषे यात्रा कैश्चिदुक्ता ॥

रवौ सूर्योदये यायादुषःकाले शनैश्चरे ॥
भौमे भुक्त्वा सदान्यत्र वारे कैश्चिदितीरितम् ॥ २३ ॥

अब वारोंमें कालविशेषसे यात्रा लिखतेहैं-रविवारको सूर्योदयके समय यात्रा करे, शनैश्चरको प्रात कालके समय यात्रा करे, मंगलको भोजन करके यात्रा करे और अन्य वारोंमें सब कालमें यात्रा करे ऐसा किन्ही आचार्योंने कहाहै ॥ २३ ॥

## अथ यात्रायामुत्तममध्यमनेष्टनक्षत्राणि ।

धनिष्ठा श्रवणो हस्तोऽनुराधा रेवतीद्वयम् ॥ मृगः पुनर्वसु पुष्यः श्रेष्ठान्येतानि भानि च ॥ २४ ॥ मूलं पूर्वात्रयं ज्येष्ठा

रोहिणी शततारका ॥ उत्तराणां त्रयं याने मध्यान्येतानि भानि च ॥ २५ ॥ चित्रात्रयं मघाश्लेषा कृत्तिकार्द्रा भरण्यपि ॥ वर्ज्यान्येतानि धिष्ण्यानि यात्रायां जन्मभं तथा ॥ २६ ॥

अब यात्रामें उत्तम मध्यम नेष्ट नक्षत्र लिखतेहैं—धनिष्ठा, श्रवण, हस्त, अनुराधा, रेवती, अश्विनी, मृगशिरा, पुनर्वसू, पुष्य ये नक्षत्र श्रेष्ठहैं ॥ २४ ॥ मूल, तीनों पूर्वा, ज्येष्ठा, रोहिणी, शतभिषा, तीनों उत्तरा यह नक्षत्र यात्रामें मध्यम है ॥ २५ ॥ चित्रा, स्वाति, विशाखा, मघा, आश्लेषा, कृत्तिका, आर्द्रा, भरणी और जन्मनक्षत्र ये सब नक्षत्र यात्रामें वर्जितहैं ॥ २६ ॥

## अथ वर्ज्यनक्षत्राणामावश्यके त्याज्यघटिकाः।

पूर्वासु षोडशैवाद्याः कृत्तिकास्वेकविंशतिः ॥ मघास्वेकादश त्याज्या भरण्याः सप्तनाडिकाः ॥ २७ ॥ स्वात्याश्लेषाविशाखासु ज्येष्ठायाश्च चतुर्दश ॥ पापा लग्नबले शेषनाडीष्वावश्यके सति ॥ २८ ॥

अब वर्ज्यनक्षत्रोंके आवश्यकमें त्याज्य घटिका लिखतेहै—तीनों पूर्वाके आदिकी सोलह घडी आवश्यक यात्रामें त्याज्य है और कृत्तिकाके आदिकी २१ इक्कीस घड़ी, मघाके आदिकी ग्यारह घड़ी, भरणीके आदिकी सातघड़ी ॥ २७ ॥ स्वाती, आश्लेषा, विशाखा, ज्येष्ठा इन नक्षत्रोंके आदिकी चौदहचौदह घड़ी आवश्यक यात्रामें त्याज्य हैं और यदि लग्न बलवान् होय तो पूर्वोक्त नक्षत्रोंकी शेषघड़ी आवश्यक यात्रामें शुभ होतीहैं ॥ २८ ॥

## अथात्र मतांतरम्।

कृत्तिकाया मघास्वात्योरेके पूर्वदलं जगुः ॥
उत्तरार्द्धं तु चित्राया भरण्याश्लेषयोरपि ॥ २९ ॥

अब यहां मतान्तर लिखतेहैं-किन्हीं आचार्योंने ऐसा कहाहै कि, कृत्तिका, मघा, स्वाती इन नक्षत्रोंका पूर्वार्द्ध और चित्रा, भरणी, आश्लेषा इन नक्षत्रोंका उत्तरार्द्ध आवश्यक यात्रामें त्याग देवे ॥२९॥

## अथोशनसो मते तु ।

सर्वस्वाती मघा त्याज्योशनसो मतमीदृशम् ॥ ३० ॥

अब शुक्रका मत लिखतेहैं-शुक्राचार्यका ऐसा मत है कि, स्वाति और मघा नक्षत्र संपूर्णही त्याज्यहैं ॥ ३० ॥

## अथ नक्षत्रविशेषे विजययात्राप्रकारः ।

संप्रस्थायानुराधायां स्थित्वा ज्येष्ठाऽभिधे ततः ॥ मूले गच्छेन्महीपालो यदि स्याच्च जयो ध्रुवम् ॥ ३१ ॥ हस्ते प्रस्थाय वा स्थित्वा तत्रैव स्वातिचित्रयोः ॥ विशाखायां व्रजन्भूपो विजयं लभते ध्रुवम् ॥ ३२ ॥ प्रस्थाय मृगशीर्षे वा स्थित्वार्द्रायां ततो व्रजन् ॥ पुनर्वस्वोर्महीपालो लभते च जयश्रियम् ॥ ३३ ॥ रेवत्यां पुष्यभे वापि धनिष्ठायां महीश्वरः॥उषित्वा स्वीयशिबिरे रात्रौ गच्छञ्जयत्यरीन् ॥ ३४ ॥

अब नक्षत्रविशेषमें विजययात्राप्रकार लिखतेहैं-अनुराधा नक्षत्रमें प्रस्थान करे, ज्येष्ठामें स्थितरहे और मूल नक्षत्रमें यात्रा करे तो अवश्य राजाकी विजय होतीहै ॥ ३१ ॥ हस्त नक्षत्रमें प्रस्थान करे और स्वाति तथा चित्रा नक्षत्रमें वहीं ठहरे और फिर विशाखा नक्षत्रमें राजा यात्रा करे तो अवश्य जय पावे ॥ ३२ ॥ अथवा मृगशीर्ष नक्षत्रमें प्रस्थान करके आर्द्रामें ठहरारहे और फिर पुनर्वसु नक्षत्रमें राजा यात्रा करे तो जय और लक्ष्मीको प्राप्त करे ॥ ३३ ॥ रेवती, पुष्य, अथवा धनिष्ठा नक्षत्रमें राजा अपने डेरेमें रात्रिभर निवास करके प्रभातही यात्रा करताहै तो शत्रुओंको जीत लेताहै ॥ ३४ ॥

## अथ दिक्छूलम्।

दिक्छूलं पूर्वदिग्भागे ज्येष्ठायां शनिसोमयोः ॥ पूर्वाभाद्रपदे याम्यां तथैव गुरुवासरे ॥ ३५ ॥ रवौ शुक्रे च रोहिण्यां पश्चिमायां त्यजेद्बुधः ॥ उदीच्यामुत्तराफाल्गुन्यभिधे मंगले बुधे ॥ ३६ ॥

अब दिक्शूल लिखतेहैं—ज्येष्ठा नक्षत्र और शनैश्चर सोमवारके दिन पूर्वदिशामें दिक्शूल होताहै और पूर्वाभाद्रपद नक्षत्र तथा बृहस्पतिवारके दिन दक्षिणमें दिक्शूल होताहै ॥ ३५ ॥ रविवार, शुक्रवार तथा रोहिणी नक्षत्रमें दिशाशूल पश्चिममें होताहै और मंगल तथा बुधवार उत्तराफालगुनी नक्षत्रमें उत्तरमें दिक्शूल होताहै ॥३६॥

## अथ विदिक्छूलं वारेषु।

आग्नेय्यां च गुरौ चंद्रे नैर्ऋत्यां रविशुक्रयोः ॥
ऐशान्यां चंद्रजे वायौ मंगले गमनं त्यजेत् ॥ ३७ ॥

अब विदिक्शूल वारोंमें लिखतेहैं—बृहस्पति और चंद्रवारके दिन आग्नेय दिशामें विदिक्शूल होताहै, सूर्य और शुक्रके दिन नैर्ऋत्य दिशामें, बुधको ईशान दिशामें और मंगलको वायव्य दिशामें विदिक्शूल होताहै यात्रामें सामने दिक्शूल और विदिक्शूल त्याज्यहैं ॥ ३७ ॥

## अथ दिक्शूलदोषापनुत्तये विधिः।

सूर्ये घृतं पयश्चंद्रे गुडं भौमे बुधे तिलान् ॥ गुरौ दधि यवाञ्छुक्रे माषान्मंदे नरस्तथा ॥ ३८ ॥ संप्राश्यावश्यके गच्छन्दिक्शूले न च दोषभाक् ॥ तांबूलं भास्करे चंद्रे चंदनं मंगले मृदः ॥ ३९ ॥ बुधे पुष्पं दधीज्ये च घृतं शुक्रे तिलाञ्छनौ ॥ दत्त्वा भुक्त्वाथ धृत्वा वा न दोषः शूलजो यतः ॥ ४० ॥

अब दिक्शूलदोष नाशकेलिये विधि लिखतेहैं-रविवारको घी, सोमवारको दूध, मंगलको गुड़, बुधको तिल, बृहस्पतिको दधि, शुक्रको जौ, शनैश्चरको उड़द ॥ ३८ ॥ भक्षण करके आवश्यकमें यात्रा करै तो दिशाशूलका दोष नही होताहै तथा रविवारको तांबूल, सोमवारको चंदन, मंगलको मिट्टी ॥ ३९ ॥ बुधको पुष्प, बृहस्पतिको दधि, शुक्रको घृत, शनैश्चरको तिल दान करके अथवा भोजन करके अथवा उक्त वस्तु लेकरके चलै तो दिक्शूलका दोष नही होताहै ॥ ४० ॥

## अथ समयविशेषे त्याज्यानि भानि ।

पूर्वाह्णे रोहिणीधिष्ण्यं विशाखाकृत्तिकोत्तराः॥मध्याह्नसमये ज्येष्ठाऽश्लेषार्द्रामूलभं तथा ॥ ४१ ॥ अपराह्णे परित्याज्या गमने चाश्विनी सदा ॥ चित्रांत्यमनुराधा च यामिन्याः प्रथमेशके ॥ ४२ ॥ मध्येंशके त्यजेत्पूर्वात्रितयं भरणी मघा ॥ प्रांत्ये पुनर्वसुस्वातीधनिष्ठाशततारकाः ॥ ४३ ॥

अब समयविशेषमें त्याज्य नक्षत्र लिखतेहैं-पूर्वाह्णके समय रोहिणी, विशाखा, कृत्तिका, उत्तरा इन नक्षत्रोंमे यात्रा न करै और मध्याह्नके समय ज्येष्ठा, आश्लेषा, आर्द्रा, मूल इन नक्षत्रोंमे और ( अपराह्ण ) तीसरे प्रहरके समय अश्विनी नक्षत्रमें और रात्रिके प्रथम भागमें चित्रा, रेवती, अनुराधा नक्षत्रमें ॥ ४१ ॥ ४२ ॥ और रात्रिके मध्यभागमें तीनों पूर्वा, भरणी, मघा इन नक्षत्रोंमे और रात्रिके अन्त्य भागमें पुनर्वसू, स्वाति, धनिष्ठा, शतभिषा इन नक्षत्रोंमें यात्रा न करै क्योंकि, उक्त समयोंमें उक्त नक्षत्र त्याज्य है ॥ ४३ ॥

## अथ सार्वकालं यात्रायां शुभनक्षत्राणि ।

श्रवे पुष्ये मृगे हस्ते श्रेष्ठा यात्रा च सर्वदा ॥ ४४ ॥

अब सार्वकालिक यात्रामें शुभनक्षत्र लिखतेहैं-श्रवण, पुष्य, मृगशिर, हस्त इन नक्षत्रोंमें यात्रा सब समय श्रेष्ठ होतीहै ॥ ४४ ॥

## अथ युद्धयात्रायां विशेषः।

राहुभुक्तानि ऋक्षाणि जीवपक्षस्त्रयोदश ॥ मृतपक्षस्तु भोग्यानि कर्तरी तदधिष्ठितम् ॥ ४५ ॥ ततः पंचदशे ग्रस्तं चिंत्यं युद्धे गमादिषु ॥ जीवपक्षः शुभो ज्ञेयो मृतपक्षस्त्वशोभनः ॥ ४६ ॥ मृतपक्षाच्छुभं ग्रस्तं ग्रस्तभात्कर्तरी शुभा ॥ मृतपक्षे सहस्रांशौ जीवपक्षे विधौ स्थिते ॥ ॥ ४७ ॥ यात्रायां विजयस्तत्र विपरीते पराजयः ॥ उभौ चेज्जीवपक्षस्थौ यात्रा तत्रापि शोभना ॥ ४८ ॥ चेदुभौ मृत्युपक्षस्थौ रवींदू तत्र कष्टदा॥ यायिनो जयदश्चंद्रो जीवपक्षे व्यवस्थितः ॥ ४९ ॥ भानुमाञ्जीवपक्षस्थः स्थायिनो विजयावहः ॥ ५० ॥

अब युद्धयात्रामें विशेष लिखतेहैं—राहु जिस नक्षत्रपर स्थित होय उस नक्षत्रसे पिछले तेरह नक्षत्र जीवपक्ष कहातेहैं और राहुस्थित नक्षत्रसे आगेके तेरह नक्षत्र मृतपक्ष कहातेहैं और राहुके अधिष्ठित नक्षत्रकी कर्त्तरी संज्ञा है ॥ ४५ ॥ और राहुनक्षत्रसे आगेका पंद्रहवां नक्षत्र ग्रस्त कहाताहै यह युद्ध और यात्रादिकोंमें विचारनाचाहिये. यात्रामें जीवपक्ष शुभ होताहै मृतपक्ष अशुभ होताहै॥४६॥मृतपक्षसे ग्रस्त नक्षत्र शुभ होताहै और ग्रस्त नक्षत्रसे कर्त्तरी नक्षत्र शुभ होताहै यदि मृतपक्षमें सूर्य होय और जीवपक्षमें चंद्रमा होय ॥ ४७॥ तो यात्रामें विजय होतीहै और इससे विपरीत होय तो पराजय होतीहै और यदि सूर्य तथा चंद्रमा दोनों ग्रह जीवपक्षमें स्थित होंय तोभी यात्रा शुभ होतीहै ॥ ४८ ॥ और जो सूर्य चंद्रमा दोनों ग्रह मृत्युपक्षमें स्थित होंय तो यात्रा कष्ट देनेवाली होतीहै और यदि चंद्रमा जीवपक्षमें स्थित होय तो जानेवालेके लिये विजय देताह और जो सूर्य जीवपक्षमें स्थित होंय तो (स्थायी) अपने स्थानपर रहनेवालेकी विजय करताहै ॥ ४९ ॥ ५० ॥

## अथाकुलगणः ।

धनिष्ठाभरणीस्वातीहस्ताश्लेषापुनर्वसू ॥ रोहिणीत्र्युत्तरं चांत्यानुराधे विषमा तिथिः ॥ ५१ ॥ सूर्येन्दुगुरुमंदाख्यवाराश्चैष गणोऽकुलः ॥ अत्र संप्रस्थितो राजा शत्रूञ्जयति संगरे ॥ ५२ ॥

अब अकुल कुल कुलाकुलसंज्ञा त्रिविधका फल लिखतेहैं-तहाँ प्रथम अकलगण लिखतेहैं-धनिष्ठा, भरणी, स्वाति, हस्त, आश्लेषा, पुनर्वसू, रोहिणी, तीनों उत्तरा, रेवती, अनुराधा ये नक्षत्र और विषम तिथि ॥ ५१ ॥ सूर्य, चंद्र, बृहस्पति, शनैश्चर वार यह सब अकुलगण है इसमें यात्रा करनेवाला राजा युद्धमें शत्रुओंको जीतलेताहै ॥ ५२ ॥

## अथ कुलगणः ।

पूर्वाश्विनी मघा पुष्यः कृत्तिका श्रवणो मृगः ॥ चित्रा ज्येष्ठा विशाखा च कुजशुक्रौ चतुर्दशी ॥ ५३ ॥ अथार्काश्विमितास्तिथ्यो गणोयं कुलसंज्ञकः ॥ संग्रामे यायिनो भंगः स्थायिनोऽत्र जयो भवेत् ॥ ५४ ॥

अब कलगण लिखतेहैं-पूर्वा तीनों, अश्विनी, मघा, पुष्य, कृत्तिका, श्रवण, मृगशिर,चित्रा, ज्येष्ठा, विशाखा ये नक्षत्र; मंगल, शुक्र वार; चतुर्दशी ॥ ५३ ॥ द्वादशी, दूज तिथि ये सब कुलगणसंज्ञक हैं इसमें जानेवालेका युद्धमें भंग और स्थायीकी जय होतीहै ॥ ५४ ॥

## अथ कुलाकुलगणः ।

अभिजिन्मूलमार्द्रा च शतभं बुधवासरः ॥ द्वितीया दशमी षष्ठी कुलाकुलगणस्त्वयम् ॥ राज्ञः संप्रस्थितस्यात्र संधिर्भवति वैरिणाम् ॥ ५५ ॥

अब कुलाकुल गण लिखतेहैं—अभिजित्, मूल, आर्द्रा, शतभिषा ये नक्षत्र; बुधवार; द्वितीया, दशमी, षष्ठी तिथि ये सब कुलाकुलगणहैं ॥ ५५ ॥ इसमें जानेवाले राजाकी वैरियोंके साथ संधि होजातीहै ॥

## अथ नामादिवर्णवशान्नैसर्गिको वर्णस्वरः।

कछडाधभवानां स्यादकारो वर्णजः स्वरः ॥ खजढानमपानां तु स्वर ईकार उच्यते ॥ ५६ ॥ गरुतापयशा वर्णा उकारस्वरभाजिनः॥ घटथाफरसा वर्णा एकारस्वरसंज्ञकाः॥ ॥ ५७ ॥ चठदा वलहाश्चैषामोकारः कथितः स्वरः ॥ नाम्नि यश्चादिमो वर्णस्तद्वशाद्वर्णजः स्वरः ॥ ५८ ॥

अब नामादिवर्णवशसे नैसर्गिक वर्णस्वर लिखतेहैं—क, छ, ड, ध, भ, व इन वर्णोंका अकारस्वर है. ख, ज, ढ, न, म, प इन वर्णोंका ईकारस्वरहै ॥ ५६ ॥ ग, रु, ता, प, य, श इन वर्णोंका उकारस्वर है. घ, ट, थ, फ, र, स इन वर्णोंका एकारस्वर है ॥ ५७ ॥ च, ठ, दा, व, ल, ह इन वर्णोंका ओकारस्वरहै जिसके नामके आदिमें जो वर्ण होय उसी वर्णका स्वर जानलेना चाहिये ॥ ५८ ॥

## अथ तिथिस्वरः।

अकारादिस्वराः पंच नंदाद्यास्तिथयः क्रमात् ॥ निजस्वरतिथेर्ज्ञेया बालप्रभृतयः स्वराः ॥ ५९ ॥ आद्यो बालः कुमारोन्यो युवा वृद्धस्तथा मृतिः ॥ ईषल्लाभकरस्त्वाद्यः कुमारस्त्वर्द्धलाभदः ॥ ६० ॥ सर्वां सिद्धिं युवा कुर्याद्वृद्धो मध्योऽधमोंतिमः ॥ ६१ ॥

अब तिथिस्वर लिखतेहैं—नंदादिक पांच तिथियोंके अकारादि पांच स्वर हैं अर्थात् नंदाका अकार, भद्राका इकार, जयाका उकार, रिक्ताका एकार और पूर्णाका ओकारस्वरहै; अपनेस्वरकी तिथिके

बाल आदिके स्वर जानने ॥ ५९ ॥ प्रथम बालस्वर, फिर दूसरा कुमार, तीसरा युवा, चौथा वृद्ध, पांचवां मृत्युस्वर होताहै । पहिला बालस्वर थोड़ा लाभ देताहै, कुमारस्वर आधा लाभ देताहै ॥ ६० ॥ युवास्वर सर्वसिद्धि करताहै, वृद्धस्वर मध्यम है और मृत्युस्वर अधम है ॥ ६१ ॥

## अथ तात्कालिकस्वरः ।

तिथेर्गतैष्ययोगस्य यः स्यादेकादशांशकः ॥
तात्कालिकः स्वरश्चासौ स्वावस्थातः क्रमात्स्मृतः ॥ ६२ ॥

अब तात्कालिकस्वर लिखतेहैं-तिथिकी गतघटी और भोग्यघटीके जोड़का ग्यारहवां भाग जो होय सो अपनी अवस्थाके क्रमसे तात्कालिक स्वर होताहै ॥ ६२ ॥

## अथ पथिराहुचक्रम् ।

विशाखापुष्यभाऽऽश्लेपाऽनुराधाऽश्विशताभिधम् ॥ धनिष्ठैतानि धर्मे स्युश्चक्रेऽस्मिन्पथिराहुके ॥ ६३ ॥ भरणी श्रवणो ज्येष्ठा मघा स्वाती पुनर्वसू ॥ पूर्वाभाद्रपदैतानि भान्यर्थे गदितानि च ॥ ६४ ॥ चित्रार्द्रा कृत्तिका मूलं पूर्वाफाल्गुनिकाऽभिजित् ॥ तथा भाद्रोत्तरैतानि कामे धिष्ण्यानि सप्त च ॥ ६५ ॥ उत्तराफाल्गुनी हस्तो रोहिणी रेवती मृगः ॥ पूर्वापाढाद्वयं मोक्षे भान्येतानि बुधा जगुः ॥ ॥ ६६ ॥ धर्मर्क्षसंस्थिते सूर्ये चंद्रो मोक्षार्थगः शुभः ॥ अर्थर्क्षे भास्करे चंद्रः प्रशस्तो धर्ममोक्षगः ॥ ६७ ॥ सूर्ये कामर्क्षगे श्रेष्ठो मोक्षधर्मार्थगः शशी ॥ मोक्षधिष्ण्यस्थिते सूर्ये चंद्रमा धर्मगः शुभः ॥ ६८ ॥ अन्यथा त्वशुभो ज्ञेयो यात्रायां शुभमीप्सुभिः ॥ ६९ ॥

अब पथिराहुचक्र लिखतेहैं-विशाखा, पुष्य, आश्लेपा, अनुराधा, अश्विनी, शतभिषा, धनिष्ठ ये नक्षत्र पथिराहुके चक्रमें

धर्ममार्गके हैं ॥ ६३ ॥ भरणी, श्रवण, ज्येष्ठा, मघा, स्वाती, पुनर्वसू, पूर्वाभाद्रपदा ये नक्षत्र अर्थमार्गके हैं ॥ ६४ ॥ चित्रा, आर्द्रा, कृत्तिका, मूल, पूर्वाफाल्गुनी, अभिजित्, उत्तराभाद्रपदा ये सात नक्षत्र काममार्गके हैं ॥ ६५ ॥ उत्तराफाल्गुनी, हस्त, रोहिणी, रेवती, मृगशिरा, पूर्वाषाढा, उत्तराषाढा ये नक्षत्र मोक्षमार्गके हैं ऐसा पंडितोंने कहाहै ॥ ६६ ॥ यदि धर्मनक्षत्रमें सूर्य स्थित होय और चंद्रमा मोक्ष वा अर्थमें स्थित होय तो यात्रा शुभ होतीहै और जो अर्थमें सूर्य होय और धर्म वा मोक्षमें चंद्रमा स्थित होय तो यात्रा श्रेष्ठ होतीहै ॥ ६७ ॥ सूर्य तो कामसंज्ञक नक्षत्रोंमें और चंद्रमा धर्म और अर्थसंज्ञक नक्षत्रोंमें होय तो श्रेष्ठहोताहै तथा मोक्ष नक्षत्रोंमें सूर्य स्थित होय तो चंद्रमा धर्मनक्षत्रोंमें शुभ होताहै॥६८॥ अन्यथा यात्रा अशुभ होतीहै यात्रामें शुभ चाहनेवाले पुरुषोंको यह पथिराहुचक्र जानना चाहिये ॥ ६९ ॥

## अथ यात्रायां गोरक्षकमते तिथिचक्रं तत्फलं च।

मासे शुक्लादिके पौषे तिथयः प्रतिपन्मुखाः॥ द्वितीयाद्यास्तु माघे स्युस्तृतीयाद्यास्तु फाल्गुने ॥ ७० ॥ एवं चान्येषु मासेषु तिथ्यो द्वादशसंज्ञकाः ॥ लेख्याश्चक्रे त्रयोदश्याः संविहाय तिथित्रयम् ॥ ७१ ॥ तृतीयादित्रये यत्त्रयोदश्यादिके फलम् ॥ मासेषु तिथिकोष्ठस्थतिथीनां क्रमतः फलम्॥७२॥याने प्राच्यादिकाष्ठासु वक्ष्ये द्वादशधा क्रमात्॥ सौख्यं शून्यं धनार्तिश्च लाभः प्रीतिर्भयं धनम् ॥ ७३ ॥ कष्टं सौख्यं कलिर्मृत्युःशून्यं प्राच्यां फलं क्रमात्॥क्लेशो नैस्वं व्यथा सौख्यं द्रव्याप्तिर्लाभपीडने ॥ सौख्यं लाभो व्ययो लाभः सौख्यं याम्यदिशि ध्रुवम् ॥ ७४ ॥ भयं नैस्वं प्रियाप्तिश्च भद्रं द्रव्यं मतिर्धनम् ॥ क्लेशाल्लाभोऽर्थसिद्धिः

स्वं लाभो मृत्युश्च पश्चिमे ॥ ७५ ॥ धनं मिश्रं धनं लाभः सौख्यं लाभो व्यथा सुखम् ॥ कष्टं द्रव्यत्वशून्यत्वे कष्टमुत्तरदिक्फलम् ॥ ७६ ॥

अब यात्रामें गोरक्षमतमें तिथिचक्र और उसका फल लिखतेहैं- पौषमासमें शुक्लप्रतिपदासे लेकर और माघमें शुक्लाद्वितीयासे लेकर, फाल्गुनमें शुक्लातृतीयासे लेकर इसी प्रकार अन्य मासोंमें शुक्लाचतुर्थी, शुक्लापंचमी आदि तिथियोंसे लेकर बारह तिथि चक्रमें लिखै और त्रयोदश्यादि तीन तिथि ( १३-१४-३० ) छोड़देवे अर्थात् नहीं लिखे ॥ ७० ॥ ७१ ॥ तृतीयादि तीन तिथियोंका जो फल है सोही त्रयोदश्यादि तीन तिथियोंकाभी जाने. मासोंमें तिथिकोष्ठ लिखेहुए हैं तिनमें बारहतिथियोंका बारह प्रकारका फल क्रमसे पूर्वादि दिशाओंकी यात्रामें जो होताहै उसे कहतेहैं सौख्य, शून्य, धननाश, लाभ, प्रीति, भय, धन ॥ ७२ ॥ ७३ ॥ कष्ट, सौख्य,

अथ गोरक्षमतेन यात्राचक्रम् ।

| पौ | मा | फा | चै. | वै. | ज्य | आ | श्रा | भा | आ | का | मा | पूर्वे | दक्षिणे | पश्चिमे | उत्तरे |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | सौख्य | क्लेश | भय | धन |
| २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | शून्य | दरिद्र | दरिद्र | मिश्र |
| ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | धनना | व्यथा | प्रिया | धन |
| ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | लाभ | सौख्य | भद्र | लाभ |
| ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | प्रीति | द्रव्य | द्रव्य | सौख्य |
| ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | भय | लाभ | मति | लाभ |
| ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | धन | पीडा | धन | व्यथा |
| ८ | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | कष्ट | सुख | क्लेश | सुख |
| ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | सुख | लाभ | लाभ | कष्ट |
| १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | कलि | व्यय | अर्थसि | द्रव्य |
| ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | मृत्यु | लाभ | धनना | शून्य |
| १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | शून्य | शुभ | मृत्यु | कष्ट |

कलह, मृत्यु, शून्य ये फल क्रमसे पूर्वदिशाकी यात्राका है. क्लेश, निर्धनता, व्यथा, सौख्य, द्रव्याप्ति, लाभ, पीडा, सौख्य, लाभ, व्यय, लाभ, सौख्य यह फल दक्षिण दिशाका है ॥ ७४ ॥ भय, निर्धनता, प्रियकी प्राप्ति, कल्याण, द्रव्यलाभ, मति, धन, क्लेशसे लाभ, अर्थसिद्धि, धन, लाभ, मृत्यु यह फल पश्चिमदिशाका है ॥ ७५ ॥ धन, मिश्र, धन, लाभ, सौख्य, लाभ, व्यथा, सुख, कष्ट, द्रव्यत्व, शून्यत्व, कष्ट यह फल उत्तर दिशाका है ॥ ७६ ॥

## अथ सर्वांकयोगफलम् ।

तिथिनक्षत्रवारैक्यं सप्ता ७ ऽष्टा ८ ऽग्नि ३ विभाजितम् ॥ आदिशून्येऽतिपीडा स्यान्मध्यशून्ये भयं तथा ॥ ७७ ॥ शून्यंत्ये वपुषो रोगो मृत्युः शून्यत्रये ध्रुवम् ॥ जयश्चाऽर्थागमः सौख्यं शेषे च स्थानकत्रये ॥ चिंत्यमेतद्धि यात्रादौ शुक्लाद्यास्तिथयोत्र तु ॥ ७८ ॥

अब सर्वांकयोगफल लिखतेहैं–तिथि, नक्षत्र, वारको जोडकर उसे तीन जगह लिखे एक जगह सातका, दूसरी जगह आठका, तीसरी जगह तीनका, भाग दे आदिमें शून्य बचे तो अतिपीडा होय, मध्यमें शून्य बचे तो भय होय ॥ ७७ ॥ अंत्यमें शून्य बचे तो शरीरमें रोग होय और तीनों जगह शून्य बचै तो मृत्यु होय और जो तीनों जगह अंक शेष बचैं तो क्रमसे जय, अर्थागम, सौख्य होताहै यह सर्वांकयोग यात्रामें अवश्यही विचारे. परन्तु इसमें शुक्लपक्षकी प्रतिपदासे लेकर तिथि जोड़नी चाहिये ॥ ७८ ॥

## अथाडलभ्रमौ त्याज्यौ ।

रविभात्साभिजिच्चांद्रे सप्तभि ७ र्व्य २ द्रि ७ शेषके ॥ आडलोथ त्रि ३ षट् ६ शेषे भ्रमो नेष्टौ गमे त्विमौ ॥७९॥

अव आडल और भ्रम त्याज्य लिखतेहैं-सूर्यके नक्षत्रसे अभिजित्समेत चंद्रमाके नक्षत्रतक गिनै सातका भागदे शेष दो २ वा सात ७ वचै तो आडल योग होताहै और तीन ३ अथवा छह ६ वचै तो भ्रम योग होताहै ये दोनों योग यात्रामें नेष्ट है ॥ ७९ ॥

## अथ प्रशस्तो हैवरयोगः ।

चांद्रभं सूर्यभाद्युक्तं पक्षादितिथिवासरैः ॥
नवाप्तं सप्तशेषे तु हैवरः स्याच्छुभो गमे ॥ ८० ॥

अव प्रशस्त हैवरयोग लिखतेहैं-सूर्यके नक्षत्रसे चंद्रमाके नक्षत्र तक गिनै फिर उसमें पक्षादितिथि और वार जोड दे नौका भाग देय जो सात ७ शेष वचै तो हैवर योग होताहै यात्रामें शुभ कहाहै ॥ ८० ॥

## अथ घवाडाख्यः शुभयोगः ॥

रविभाच्चांद्रभं त्रिघ्नं ३ तिथियुक्सप्त ७ भाजितम् ॥
घबाडस्तु त्रिशेषे स्याद्गमने श्रेष्ठ ईरितः ॥ ८१ ॥

अव घवाडाख्य शुभयोग लिखतेहैं-सूर्यके नक्षत्रसे चंद्रमाके नक्षत्रतक गिनै तीनसे गुणा करके तिथि जोड़ देय सातका भाग देनेसे जो तीन शेष वचै तो घवाड़ योग होताहै यात्रामें श्रेष्ट कहाहै ॥ ८१ ॥

## अथ घातचंद्राः ।

जन्मस्थो मेषराशेः स्याद्वृषभस्य तु पंचमः ॥ नवमो मिथुनस्येंदुर्द्वितीयः कर्कटस्य च ॥ ८२ ॥ षष्ठस्तु सिंहराशेश्च कन्याया दशमः स्मृतः ॥ तृतीयस्तु तुलाराशेर्वृश्चिकस्य च सप्तमः ॥ ८३ ॥ चतुर्थो धन्विनो ज्ञेयो मकरस्याऽष्टमस्तथा ॥ कुंभस्यैकादशः प्रोक्तो मीनस्य द्वादशः स्मृतः ॥ ८४ ॥ घातचंद्रा इमे वर्ज्या यात्रायां

राजदर्शने ॥ विवाहेवाहनारोहे युद्धे भैषज्यसेवने ॥ विवाहादिशुभेऽन्यत्र नैते चिंत्या मनीषिभिः ॥ ८५ ॥

अथ घातचंद्र लिखतेहैं–मेषराशिको जन्मका चंद्रमा घातक है, वृषको पांचवां, मिथुनको नौवां, कर्कको दूसरा ॥ ८२ ॥ सिंहको छठा, कन्याको दशवां, तुलाको तीसरा, वृश्चिकको सातवां ॥ ८३ ॥ धनुको चौथा, मकरको आठवां, कुंभको ग्यारहवां, मीनराशिको बारहवां चंद्रमा घातक होताहै ॥ ८४ ॥ यह घातकचंद्रमा यात्रामें, राजदर्शनमें, विवाहमें, सवारीपर चढनेमें, युद्धमें, औषध सेवनमें, विवाहादि शुभ कार्योंमें वर्जित है और अन्य कार्योंमें शुभ है ऐसा पंडितोंको विचारना चाहिये ॥ ८५ ॥

## अथ घातनक्षत्राणि।

मेषे मघा वृषे हस्तो मिथुने स्वातिरुच्यते ॥ कर्कटे चानुराधाख्यं सिंहे मूलं प्रकीर्त्तितम् ॥ ८६ ॥ कन्यायां श्रवणो ज्ञेयस्तुलायां शततारका ॥ वृश्चिके रेवतीधिष्ण्यं भरणी धनुषि स्मृता ॥ ८७ ॥ मकरे रोहिणी कुंभे चार्द्राश्लेषा तु मीनभे॥एतानि घातधिष्ण्यानि जन्मराशौ नरस्य च॥८८॥

अथ घात नक्षत्र लिखतेहैं–मेषराशिको मघा नक्षत्र घातहै, वृषको हस्त, मिथुनको स्वाति, कर्कको अनुराधा, सिंहको मूल, कन्याको श्रवण, तुलाको शतभिषा, वृश्चिकको रेवती, धनुको भरणी, मकरको रोहिणी, कुंभको आर्द्रा, मीनको आश्लेषा मनुष्योंकी जन्मराशिपर यह घातक नक्षत्र कहेहैं ॥ ८६ ॥ ८७ ॥ ८८ ॥

## अथ घातवाराः।

मेषे रविर्बुधः कर्के मिथुने चंद्र एव च ॥ कन्यावृषभसिंहेषु शनिः स्यान्मकरे कुजः ॥ ८९ ॥ धनुर्वृश्चिकमीनेषु शुक्रोथ तुलकुंभयोः॥जीवश्चैते जन्मराशौ घातवारा बुधैःस्मृताः९०॥

अव घातवार लिखतेहैं—मेष राशिवालेको रविवार, कर्क राशिवालेको बुधवार, मिथुन राशिको चंद्रवार, कन्या वृष सिंह राशिवालेको शनिवार, मकर राशिवाले मनुष्योंको मंगलवार ॥ ८९ ॥ धनु वृश्चिक मीन राशिवालेको शुक्रवार, तुला और कुंभ राशिवालेको बृहस्पतिवार घातहै पंडितोंने जन्मराशिपर ये घातवार कहेहैं ॥९०॥

## अथ घाततिथयः ।

मेषवृश्चिकयोर्नंदा भद्रा मिथुनकर्कयोः ॥
कन्यावृषभमीनेषु पूर्णा घाततिथिः स्मृता ॥ ९१ ॥

अव घाततिथियें लिखतेहैं—मेष और वृश्चिक राशिको नंदा तिथि; मिथुन और कर्कराशिको भद्रा; कन्या, वृष, मीन राशिको पूर्णा घाततिथि हैं ॥ ९१ ॥

## अथ घाततिथीनां त्याज्यघटिकाः ।

कार्ये त्वावश्यके नाडीषट्कं घाततिथौ बुधैः ॥
आदिमं संपरित्याज्यं नो निंद्याः शेषनाडिकाः ॥ ९२

अव घाततिथिओंकी त्याज्यघटिका लिखतेहैं—आवश्यक कार्य होय तो तिथिके आदिकी छह घडी पंडितोंने त्याज्य कहीहैं और शेष घडी शुभ होतीहैं निंदित नहीं ॥ ९२ ॥

## अथावश्यके घातचंद्रस्य नक्षत्रपादास्त्याज्याः ।

मेषेषु कृत्तिकाद्योंघ्रि १ वृषे चित्राद्वितीयकः २ ॥ युग्मे शतेतृतीयोंघ्रि ३ मघाया अपि कर्कटे ॥ ९३ ॥ धनिष्ठाद्य १ स्तथा सिंहे स्त्रियां चार्द्रातृतीयकः ३ ॥ तुले मूलद्वितीयोंघ्रि २ रलौ चाहेस्तृतीयकः ॥ ९४ ॥ पूभातुर्यो धनुषि हि मघातुर्यो ४ मृगे तथा ॥ कुंभे मूलचतुर्थोऽ ४ भ्रिर्मीने पूभातृतीयकः ॥ ९५ ॥ त्याज्या घातविधौ चोक्तपादा आवश्यके बुधैः ॥ ९६ ॥

अब आवश्यकमें घातचंद्रका नक्षत्रपाद त्याज्य लिखतेहैं—मेष राशिवालेको कृत्तिकाका पहिला चरण, वृष राशिवालेको चित्राका दूसरा चरण, मिथुन राशिवालेको शतभिषाका तीसरा चरण, कर्क राशिवालेको मघाका तीसरा चरण॥९३॥ सिंह राशिवालेको धनिष्ठाका पहिला चरण, कन्या राशिको आर्द्राका तीसरा चरण, तुला राशिको मूलका दूसरा चरण, वृश्चिक राशिको आश्लेषाका तीसरा चरण ॥ ९४ ॥ धनु राशिको पूर्वाभाद्रपदका चौथा चरण, मकर राशिको मघाका चौथा चरण, कुंभ राशिवालेको मूलका चौथा चरण, मीन राशिवालेको पूर्वाभाद्रपदका तीसरा चरण त्याज्य है. पंडितोंने आवश्यक कार्यमें घात चंद्रमाविषे नक्षत्रोंके उक्त चरण त्याज्य बतायेहैं॥९५।९६॥

## अथ सूर्यादयो घातग्रहाः । तत्र घातसूर्याः ।

वेदे ४ भा ८ऽर्का १२श्च नंदे ९दु १ रस६ दिक् १० शैल-
७ संमिताः ॥ रुद्र ११ नेत्रा २ ग्नि ३ संख्याश्च घातसूर्या-
स्त्विमेऽजतः ॥ ९७ ॥

अब सूर्यादि घातग्रह लिखतेहैं—तहां पहिले घातसूर्य लिखतेहैं—मेषादिक राशियोंके क्रमसे चौथे, आठवें, बारहवें, नौवें, जन्मके, छठे, दशवें, सातवें, ग्यारहवें, दूसरे, तीसरे सूर्य घातक होतेहैं॥९७॥

## अथ घातचंद्राः प्रसंगात्पुनरपि ।

इंदु १ बाणां ५ क ९ नेत्रां २ग ६ दिग१० ग्नि ३ नग ७
संख्यकाः ॥ वेदा ४ष्टे ८ शा ११र्क १२ संख्यांका मेषाद्या-
तेंदवः क्रमात् ॥ ९८ ॥

अब प्रसंगसे पुनः घातचन्द्र लिखतेहैं—जन्मका, पांचवाँ, नौवां, दूसरा, छठा, दशवां, तीसरा, सातवां, चौथा, आठवां, ग्यारहवां, बारहवां चंद्रमा मेषादिक राशियोंकेलिये क्रमसे घात होताहै ॥ ९८॥

## अथ घातभौमाः ।

बाणां ५ कें ९ दु १ रसा ६ शा १० दृक् २ शैल ७ रुद्रे

११ भ ८ संमिताः ॥ सूर्या १२ ऽग्न्य ३ ब्धि ४ मिता
मेषात्क्रमाद्घातधरात्मजाः ॥ ९९ ॥

अब घात भौम लिखतेहैं-पांचवां, नौवाँ, जन्मका, छठा, दशवां, दूसरा, सातवां, ग्यारहवां, आठवां, बारहवां, तीसरा, चौथा मंगल क्रमसे मेषादि राशियोंकेलिये घात होताहै ॥ ९९ ॥

## अथ घातबुधाः ।

नेत्रां २ गा ६ शा १० ऽग्नि ३ शैले ७ श ११ वेदा ४ ष्टे
८ र्व्वं ५ क ९ संमिताः ॥ द्वादशे १२ न्दु १ मिता घात-
बोधनाः क्रमतस्त्वजात् ॥ १०० ॥

अब घात बुध लिखतेहैं-दूसरा, छठा, दशवां, तीसरा, सातवां, ग्यारहवां, चौथा, आठवां, पांचवां, नौवां, बारहवां, जन्मका मेषादिराशियोंको क्रमसे बुध घात होताहै ॥ १०० ॥

## अथ घातगुरवः ।

रसा ६ शा १० नेत्र २ शैले ७ श ११ वह्नि ३ नागा ८
ऽर्क १२ संमिताः ॥ नंदें ९ द्व १ ब्धी ४ षु ५ संख्यास्तु
घातेज्या मेषतः क्रमात् ॥ १०१ ॥

अब घातगुरु लिखतेहैं-छठा, दशवां, दूसरा, सातवां, ग्यारहवां, तीसरा, आठवां, बारहवां, नौवॉं, जन्मका, चौथा, पांचवां बृहस्पति मेषादि राशियोंके क्रमसे घात होताहै ॥ १०१ ॥

## अथ घातभृगवः ।

शैल ७ दिग् १० वह्नि ३ नागा ८ऽर्क १२ वेद ४ नंदें ९
दुभि १ मिताः ॥ आशा १० ऽश्वि २ बाणां ५ ग ९ संख्या
घातशुक्रास्तु मेषभात् ॥ १०२ ॥

अब घात भृगु लिखतेहैं-सातवां, दशवां, तीसरा, आठवां, बारहवां, चौथा, नौवां, जन्मका, दशवां, दूसरा, पांचवां, छठा घात शुक्र मेषादि राशियोंको क्रमसे होताहै ॥ १०२ ॥

## अथ घातशनयः ।

वह्नि ३ शैले ७ श ११ वेदा ४ ऽष्ट ८ सूर्य १२ वाणां ५ क ९ पणिमताः ॥ दि १० गिंदु १ नेत्र २ संख्याश्च मेषाद्धातशनैश्चराः ॥ १०३ ॥

अब घातशनि लिखतेहैं—तीसरा, सातवां, ग्यारहवां, चौथा, आठवां, बारहवां, पांचवां, नौवां, छठा, दशवां, जन्मका, दूसरा शनैश्चर मेषादि राशियोंकेलिये क्रमसे घात होताहै ॥ १०३ ॥

## अथ स्त्रीणां घातचंद्राः ।

भू १ नागा ८ श्वां ७ क ९ वेदा ४ ग्नि ३ रसा ६ ऽश्या २ शा १० शिवे ११ पु ५ भिः ॥ सूर्यैश्च १२ प्रमिता मेषाद्धातचंद्रा मृगीदृशाम् ॥ १०४ ॥

अब स्त्रियोंके घातचंद्र लिखतेहैं—जन्मका, आठवां, सातवां, नौवां,

अथ तिथ्यादिग्रहघातचक्रम् ।

| राशि | तिथि | वार | नक्षत्र | सू. | चं. | मं. | बु. | बृ. | शु | श. | स्त्रीघातचं. |
|---|---|---|---|---|---|---|---|---|---|---|---|
| मेष | नंदा | रवि | मघा | ४ | १ | ५ | २ | ६ | ७ | ३ | १ |
| वृष | पूर्णा | शनि | हस्त | ८ | ५ | ९ | ६ | १० | १० | ७ | ८ |
| मिथुन | भद्रा | चंद्रमा | स्वाति | १२ | ९ | १ | १० | २ | ३ | ११ | ७ |
| कर्क | भद्रा | बुध | अनुरा. | ९ | २ | ६ | ३ | ७ | ८ | ४ | ९ |
| सिंह | जया | शनि | मूल | १ | ६ | १० | ७ | ११ | १२ | ८ | ४ |
| कन्या | पूर्णा | शनि | श्रवण | ६ | १० | २ | ११ | ३ | ४ | १२ | ३ |
| तुला | रिक्ता | बृहस्प | शत. | १० | ३ | ७ | ४ | ८ | ९ | ५ | ६ |
| वृश्चिक | नंदा | शुक्र | रेवती | ७ | ७ | ११ | ८ | १२ | १ | ९ | २ |
| धनु | जया | शुक्र | भरणी | ११ | ४ | ८ | ५ | ९ | १० | ६ | १० |
| मकर | रिक्ता | मंगल | रोहिणी | ११ | ८ | १२ | ९ | १ | २ | १० | ११ |
| कुंभ | जया | बृहस्प. | आर्द्रा | २ | ११ | ३ | १२ | ४ | ५ | १ | ५ |
| मीन | पूर्णा | शुक्र | आश्ले. | ३ | १२ | ४ | १ | ५ | ६ | २ | १२ |

चौथा, तीसरा, छठा, दूसरा, दशवाँ ग्यारहवां, पांचवां, वारहवां चंद्रमा स्त्रियोंकेलिये मेषादिराशियोंके क्रमसे घात होताहै ॥ १०४ ॥

## अथ चंद्रवासस्तत्फलम् ।

मेषसिंहधनुःसंस्थः पूर्वस्यां दिशि चंद्रमाः ॥ दक्षिणस्यां वसेन्नित्यं कन्यावृषभनक्रगः ॥ १०५ ॥ तुलामिथुनकुंभस्थः पश्चिमायां निशाकरः ॥ कर्कवृश्चिकमीनेषु गतस्तिष्ठेत्तथोत्तरे ॥ १०६ ॥ संमुखेऽब्जेऽर्थलाभः स्यात्सुखं संपच्च दक्षिणे ॥ पृष्ठगे निधनं यातुर्वामभागे वसुक्षयः ॥ ॥ १०७ ॥ चंद्रवासस्त्वयं प्रोक्तो दिशो राश्यनुसारतः ॥ लोकाद्वा व्यवहाराय मूलं तस्य विचिंत्यताम् ॥ १०८ ॥

अब चन्द्रवास और उसका फल लिखतेहैं—मेष सिंह और धनुका चंद्रमा पूर्व दिशामें रहताहै.कन्या, वृष, मकरका चंद्रमा दक्षिण दिशामें रहताहै ॥ १०५॥ तुला और मिथुन, कुंभका चंद्रमा पश्चिम दिशामें रहताहै. कर्क, वृश्चिक, मीनका चंद्रमा उत्तर दिशामें रहताहै ॥१०६॥ चंद्रमा सम्मुख होय तो अर्थलाभ होताहै और दक्षिणमें होय तो सुख और संपत्ति होतीहै और पीठपीछे होय तो जानेवालेकी मृत्यु होतीहै और वामभागमें होय तो धनकी हानि होतीहै ॥ १०७ ॥ दिशाकी राशिके अनुसार लोकसे व्यवहारके लिये यह चंद्रमाका वास कहाहै इसका मूलकारण विचारना चाहिये ॥ १०८ ॥

## अथावश्यकैकस्मिन्नपि राशौ घटिकात्मकचंद्रवासश्चतुर्दिक्षु कैश्चिदुक्तः ।

नाड्यः सप्तदश प्राच्यां याम्यां तिथिमिता १५ स्ततः ॥
ततः स्वर्गमिताः २१ प्रत्यगुत्तरस्यां तु षोडश १६ ॥ १०९॥
पुनः सप्तदश १७ प्राच्यां दक्षिणस्यां चतुर्दश १४ ॥

पश्चिमे नखसंख्या २० स्ता उदीच्यां पंचभूमिताः १५
॥ ११० ॥ वारद्वयं भ्रमश्चेंदोः स्ववासस्थानतः क्रमात् ॥
एकराशिस्थितोपीह तद्दिशाजं फलं दिशेत् ॥ १११ ॥

अब आवश्यकमें एक राशिमें घटिकात्मक चंद्रवास चतुर्दिक्षुमें किसीका कहा लिखतेहैं—चन्द्रमा सत्रहघडी पूर्वमें और पंद्रहघडी दक्षिणमें,इक्कीसघड़ी पश्चिममें, सोलहघड़ी उत्तरमें ॥१०९॥ और फिर सत्रहघड़ी पूर्वमें, चौदहघडी दक्षिणमें,वीसघड़ी पश्चिममें, पंद्रहघड़ी उत्तरमें रहताहै ॥ ११० ॥ अपने निवासस्थानके क्रमसे चंद्रमाका दोवार भ्रमण होताहै. यद्यपि चंद्रमा एकराशिमें स्थितभी रहताहै परन्तु फल उसी दिशाका देताहै जिसमें कि, वह स्थितहै ॥ १११ ॥

## अथ योगिनीवासः ।

नवमीप्रतिपत्तिथ्योः प्राच्यां तिष्ठति योगिनी ॥ अग्निकोणे
तृतीयायामेकादश्यां तथैवहि ॥ ११२ ॥ त्रयोदश्यां च
पंचम्यां दक्षिणस्यां तु योगिनी ॥ द्वादश्यां नैर्ऋते ज्ञेया
चतुर्थ्यामपि सर्वदा ॥ ११३ ॥ चतुर्दश्यां च षष्ठ्यां च
पश्चिमायां दिशि ध्रुवम् ॥ वायुकोणे तु सप्तम्यां पूर्णिमायां
तथैव च ॥११४॥ योगिन्युत्तरदिग्भागे द्वितीयादशमीदिने
॥ अमायां च तथाष्टम्यामैशान्यां योगिनी भवेत् ॥११५॥
योगिनी संमुखे द्यूते गमे युद्धे च मृत्युदा ॥ अशुभा वाम-
भागस्था पृष्ठे दक्षे जयप्रदा ॥ ११६ ॥

अब योगिनीवास लिखतेहैं—नौमी और पड़वा तिथिमें योगिनी पूर्वमें रहतीहै, तृतीया और एकादशीको अग्निकोणमें योगिनी रहतीहै ॥ ११२ ॥ त्रयोदशी और पंचमीको दक्षिणमें योगिनी रहतीहै, द्वादशी और चौथको नैर्ऋत्यमें योगिनी रहतीहै ॥ ११३ ॥चतुर्दशी और षष्ठीको पश्चिममें योगिनी रहतीहै, सप्तमी और पौर्णमासीको

वायव्यमें योगिनी रहतीहै ॥ ११४ ॥ द्वितीया और दशमीको उत्तरमें योगिनी रहतीहै, अमावस्या और अष्टमीको ईशानमें योगिनी रहतीहै ॥ ११५ ॥ जुआ खेलनेमें, यात्रामे, युद्धमें सम्मुख योगिनी मृत्यु देनेवाली, वामभागमें अशुभ और पीठकी तथा दाहिनी योगिनी जय देनेवाली होतीहै ॥ ११६ ॥

## अथ तात्कालिकयोगिनी ।

प्राच्युत्तराग्निनैर्ऋत्ययाम्यपश्चिमवायुषु ॥ ऐशान्यां योगिनी गच्छेत्स्वदेशः कथितः क्रमात् ॥ ११७॥ यामार्द्धं भोगकालोस्यास्तिथौ द्विश्रयणं सदा ॥ तात्कालयोगिनी चैषा जयदा पृष्ठदक्षिणे ॥ ११८ ॥

अब तात्कालिकयोगिनी लिखतेहैं—पूर्व, उत्तर, अग्निकोण, नैर्ऋत्य, दक्षिण, पश्चिम, वायव्य, ईशान इन दिशाओंमे योगिनी क्रमसे आधेआधे प्रहर निवास करतीहै और एक तिथिमें योगिनीका भ्रमण दोवार होताहै यहही तात्कालयोगिनी कहातीहै पीठकी और दाहिनी जय देनेवाली होतीहै ॥ ११७ ॥ ११८ ॥

## अथ कालपाशः ।

उत्तरस्यां रवेर्वारे वायौ चंद्रदिने भवेत् ॥ भौमवारे प्रतीच्यां तु नैर्ऋत्यां बुधवासरे ॥ ११९ ॥ यमाशायां गुरोर्वारे वह्नेर्दिशि भृगोर्दिने ॥ प्राच्यां दिशि शनेर्वारे कालः प्रोक्तो मनीषिभिः ॥ १२० ॥ कालस्याभिमुखः पाशो वैपरीत्यं तयोर्निशि॥तावुभौ संमुखौ त्याज्यौ वामदक्षिणगौ शुभौ १२१

अब कालपाश लिखतेहैं—रविवारको उत्तरमे, सोमवारको वायव्यमें, मंगलको पश्चिममे बुधको नैर्ऋत्यमें ॥ ११९ ॥ बृहस्पतिको दक्षिणमें, शुक्रको अग्निकोणमें, शनैश्चरको पूर्वमें काल रहताहै ऐसा पूर्वपंडितोंने कहाहै ॥ १२० ॥ और कालके सम्मुख पाश रहताहै

और रात्रिमें दोनों विपरीत रहतेहैं अर्थात् दिनमें जिधर काल होताहै उस दिशामें रात्रिमें पाश रहताहै और दिनमें जिस दिशामें पाश रहताहै उसी दिशामें रात्रिमें काल रहताहै दोनों काल और पाश सम्मुख त्याज्यहैं और वाम, दक्षिणमें शुभ होतेहैं ॥ १२१ ॥

## अथ यामार्द्धात्मकश्च द्विविधो राहुः।

पूर्वाद्दिवा पराद्रात्रौ षष्ठीषष्ठीदिशं तमः ॥
यामार्द्धं भ्रमतीशानाच्चतुर्थांतुर्यां घटीद्वयम् ॥ १२२ ॥

अब यामार्द्धात्मक द्विविध राहु लिखतेहैं—राहु पूर्वसे दिनमें और पश्चिमसे रात्रिमें आधे आधे प्रहर भ्रमण करताहै, छठी छठी दिशामें जाताहै दूसरे प्रकारका राहु ईशान दिशासे चौथीचौथी दिशामें दोदोघडी रहताहै ॥ १२२ ॥

## एतदेव स्पष्टयति। अथ दिवार्द्धयामराहुः।

राहुर्यामार्द्धमानेन याति सूर्योदयात्क्रमात् ॥
शक्रवायुयमेशांबुवह्निग्लौरक्षसां दिशि ॥ १२३ ॥

इसी बातको स्पष्ट लिखतेहैं—सूर्योदयसे लेकर आधेआधे प्रहर राहु क्रमसे पूर्व, वायव्य, दक्षिण; ईशान, पश्चिम, आग्निकोण, उत्तर; नैर्ऋत्य दिशामें रहताहै ॥ १२३ ॥

## अथ रात्रावर्द्धयामराहुः।

रात्रौ वरुणवह्नींदुरक्षःशक्रमरुद्दिशि ॥
याम्यां शैवदिशि प्रोक्तो भ्रमो यामार्द्धमानतः ॥ १२४ ॥

अब रात्रिमें अर्द्धयामराहु लिखतेहैं—रात्रिमें राहु आधेआधे प्रहर पश्चिम, आग्नेय, उत्तर, नैर्ऋत्य, पूर्व, वायव्य, दक्षिण इन दिशाओंमें क्रमसे भ्रमण करताहै ॥ १२४ ॥

## अथ मुहूर्तात्मकराहुः।

ईशांतकमरुच्छक्ररक्षश्चंद्रानलांभसाम् ॥
दिशि भ्रमत्यगुर्नाडीद्वयमानाद्दिवानिशम् ॥ १२५ ॥
ज्ञेयोऽत्र षोडशांशस्तु मुहूर्तोयं दिवानिशम् ॥ १२६ ॥

## अथ भूकंपफलम् ।

भूकंपो यामतो वर्णक्रमाद्धन्याद्दिवानिशम् ॥ वायुमंडलजो भूपसस्यांबुमगधं तथा ॥ १४२ ॥ ग्रामान्नमुदकं वह्निमंडलोत्थो निहंति च ॥ इंद्रमंडलजो भूपांस्तथा गुर्जरदेशकान् ॥ ॥ १४३ ॥ भूपालांश्चीनदेशांश्च प्रचेतोमंडलोद्भवः ॥१४४॥

अब भूकम्पफल लिखतेहैं-दिनके अथवा रात्रिके समय प्रथम प्रहरमें भूकम्प होय तो ब्राह्मणोंका, दूसरे प्रहरमें होय, तो क्षत्रियोंका, तीसरे प्रहरमें होय तो वैश्योंका और चौथे प्रहरमें होय तो शूद्रोंका नाश होता है. वायुमण्डलके नक्षत्रोंमें भूकंप होय तो राजा, खेती, जल तथा मगधदेश का नाश होताहै ॥ १४२ ॥ और अग्निमंडलसे उत्पन्नहुआ भूकंप ग्राम, अन्न, जलका नाश करताहै और इंद्रमंडलका कियाहुआ भूकंप होय तो राजाओं और गुर्जर देशोंका नाश होताहै और वरुणमंडलका किया हुआ भूकंप होयतो चीन देशके राजाओंका नाश होताहै ॥ १४३ ॥१४४॥

## अथ रजोवृष्टिदर्शनम् ।

रजश्चेच्छादयेद्ग्रामप्रमुखान्नृपतींस्तदा ॥ भयं तद्दिशि धूम्राभे तस्मिन्कृष्णे रुजां भयम् ॥ १४५ ॥ रजः सूर्योदये व्योम च्छादयेद्विञ्यहं यदा ॥ तदा रोगाः प्रभूताः स्युर्निशामेकां तु भूपतेः ॥ १४६ ॥ नित्यं रात्रिद्वयं नैःस्वं क्षुद्भयं त्रिचतुर्दिनम् ॥ पंचाहं चेद्भयं घोरमृते कालं च शैशिरम् ॥१४७॥

अब रजो वृष्टि लिखतेहैं-यदि धूलि ग्राम,शहर आदिको अथवा राजाओंको ढक देय तो उस दिशामें भय होताहै जिसदिशामें वह धूलि जाय; यदि धूम्ररंगकी वा कालेरंगकी धूलि जिस दिशामें वर्षे उसी दिशामें रोगोंका भय होताहै ॥१४५॥ यदि सूर्योदयके समय धूलि आकाशको ढक देय और दो वा तीन दिन बराबर छाईरहै तो बहुतसे रोग पैदा होतेहैं और जो एकरात्रिभर छाईरहे तो राजाका

नाश होताहै ॥ १४६ ॥ और दोरात्रि वरावर धूलि छाईरहै तो निर्धनता तथा क्षुधाका भय होताहै, शिशिर ऋतुके विना अन्य ऋतुमें तीन वा चार वा पांच दिन धूलि आकाशमें छाईरहै तो घोर भय होताहै ॥ १४७ ॥

## अथ गांधर्वनगरं तत्फलञ्च ।

गांधर्वनगरं हंति वर्णाञ्छ्वेतादिवर्णकम् ॥ क्रमात्पूर्वदिशो भूपामात्यसैन्यपुरोहितान् ॥ १४८ ॥ सध्वजं निर्धनं कुर्यादायुधाग्निनिभं भयम् ॥ १४९ ॥

अव गांधर्वनगरका फल लिखतेहैं-अकाशमें गांधर्वनगर श्वेतरंगका होय तो ब्राह्मणोंका, लालरंगका होय तो क्षत्रियोंका, पीलेरंगका होय तो वैश्योंका और श्यामरंगका होय तो शूद्रोंका नाश करताहै और यदि गांधर्वनगर पूर्वदिशामें होय तो राजाका, दक्षिणमें होय तो मंत्रीका, पश्चिममें निकले तो सेनाका और उत्तरमें निकले तो पुरोहितका नाश करताहै ॥ १४८ ॥ ध्वजासहित निकले तो निर्धन और आयुध तथा अग्निके समान निकले तो भय करताहै ॥ १४९ ॥

## अथैषामुत्पातानां फलपाकसमयः ।

षड्भिर्मासैर्भुवः कंपे जायते फलमुक्तवत् ॥ दिग्दाहे विकृतौ भूतौ केतुनिर्घातयोस्त्रिभिः ॥ रजोग्निवर्षणे सद्य उत्पातेऽन्यत्र हायनात् ॥ १५० ॥

अव इन उत्पातोंका फलपाकसमय लिखतेहैं-भूकंप होंय तो उक्तफल छह महीनेमें और दिग्दाह तथा विकृतप्राणीका जन्म, केतु, निर्घात ये उत्पात होंय तो इनका फल तीन महीनेमें और रज तथा अग्निकी वर्षा होय तो तुरन्त और अन्य प्रकारका उत्पात होंय तो एकवर्षमें फल होताहै ॥ १५० ॥

## अथ वृष्टिविकृतिस्तत्फलञ्च ।

अकाले रुङ्नृपार्त्तिश्च सप्ताहं ह्यभ्रकेऽपि च ॥ वर्षणे वाऽसृजो नैःस्वं भवेन्मांसादिभिर्मृतिः ॥ १५१ ॥ भयमंगारकैर्धान्यैः फलाद्यैः स्यान्न संशयः ॥ देशनाशस्तु कोष्णांबुरक्तवृष्टौ प्रजायते॥ १५२ ॥ दीप्ते सूर्ये प्रतीपा स्याच्छाया चेदीतितो भयम् ॥ इंद्रचापेऽतिवृष्टिः स्याद्व्योम्नि चंडांशुदीपिते ॥ १५३ ॥

अब वृष्टिविकृतिफल लिखतेहैं—अकालवर्षा होय तो रोग, राजपीडा रहतीहै और जो सात दिनतक आकाशमें वादल छाया रहै तोभी यही फल होताहै और जो रुधिरकी वर्षा होय तो निर्धनता होतीहै और यदि मांसादिसहित वृष्टि होय तो मृत्यु होतीहै ॥१५१॥ अंगारोंके साथ वर्षा होय अथवा धान्य तथा फलादिकोंके सहित वर्षा होय तो भय होताहै और गर्म जल अथवा रुधिरकी वर्षा होय तो देशका नाश होताहै ॥ १५२ ॥ दिनमे छाया प्रतिकूल हो अर्थात् उलटी छाया होय तो ईति* से भय होतीहै और इंद्रधनुप दीखै तो अतिवर्षा होतीहै तथा आकाशमें सूर्यकी अत्यन्त तेजी वा दीप्त किरणे होंय तोभी अत्यंत वर्षा होतीहै ॥ १५३ ॥

## अथ पक्षिमृगादिविकृतिस्तत्फलं च ।

ग्राम्यारण्यास्तथा नीरस्थलजा द्युनिशाचराः ॥ प्राणिनो व्यत्ययं याताः स्वचक्रं पीडयंत्यमी ॥ १५४ ॥ संध्याकाले हि दीप्तायां दिशो मार्गे पतत्रिणः ॥ क्रोशंति जंबुकादीनां संघा द्वारे च तद्दिशि ॥ १५५ ॥ विहगा वियति व्यस्तचक्रा यांत इतस्ततः ॥ कुक्कुटोऽस्ते च गौर्नक्तं हेमंते रौति

* अतिवृष्टिरनावृष्टिर्मूषका शलभा शुका ॥ स्वचक्रं परचक्रं च षडेते ईतयः स्मृताः ॥

कोकिलः ॥ १५६ ॥ खराः श्वानोऽथवा स्वैरं प्रक्रीडंतिपरस्परम् ॥ ईत्यादिविकृतौ त्वक्रे पीडा भवति भूयसी ॥१५७॥

अब पक्षिमृगादिविकृति और उसका फल लिखतेहैं-ग्राम, वन, जल, स्थल, दिन, रात्रिके विचरनेवाले जीव विपरीतभावको प्राप्त होंय अर्थात् ग्रामके जीव वनमें और वनके ग्राममे एवं जलके स्थलमे और स्थलके जीव जलमें और दिनके विचरनेवाले रात्रिमे और रात्रिके विचरनेवाले दिनमे विचरैं तो अपने राज्यको पीडा होतीहै ॥ १५४ ॥ संध्यासमय ( दीप्तदिशा ) पश्चिमदिशाके मार्गमे पक्षी बोले अथवा पश्चिमदिशाके द्वारपर गीदडोंके समूह रोवैं ॥ १५५ ॥ और आकाशमे पक्षी विपरीत चक्र बाँधकर चारोंओरको इधरउधर उडैं और मुर्गा अस्तके समय, गौ रात्रिमें, कोकिल हेमंत ऋतुमें बोलैं ॥ १५६ ॥ गधे और कुत्ते परस्पर क्रीड़ा करैं इत्यादि विकार उत्पन्न होय तो अपने राज्यमे बहुत पीडा होतीहै ॥ १५७ ॥

## अथान्येप्यशुभदा उत्पाताः ।

अस्थिक्षिपति गेहे श्वा संमुखोस्ते च रोदिति ॥ यस्य तद्गेहनाशः स्यात्पण्मासाभ्यंतरे तदा ॥ १५८ ॥ रौति सूर्योदये श्वा चेद्ग्रामांते सूर्यदिङ्मुखः ॥ भूपनाशस्तदा चास्ते कृपीशा नाशमाप्नुयुः ॥१५९॥ स्तंभद्वारनिपातश्चेद्धूमोत्पत्तिर्विनाग्निना ॥ युध्यन्ते बालकाः स्वैर काष्ठलोष्टैः परस्परम् ॥ १६० ॥ तदा भूपभयं घोरं विज्ञेयं दीर्घदर्शिभिः ॥ अंगना बालका माता ब्रुवते यत्स्वभावतः ॥ सत्यं तज्जायते यस्माद्गूढा चेयं सरस्वती ॥ १६१ ॥

अब अन्यभी अशुभदायक उत्पात लिखतेहैं-यदि कुत्ता हड्डी लाकर घरमें डालदे अथवा अस्तके समय जिसके घरमे सूर्यके सामने मुख करके रोवै तो छह मासके भीतर उस घरका नाश

होजाताहै ॥ १५८ ॥ यदि कुत्ता सूर्योदयके समय सूर्यकी ओर मुख-करके ग्रामके अंतमें रोवै तो राजाका नाश होताहै और जो अस्तके समय सूर्यकी ओर मुख करके रोवै तो खेती करनेवालोंका नाश होताहै ॥ १५९ ॥ मकान, खंभा अथवा दरवाजा गिरपडै, विना-अग्निके धुँआँ उठै और काष्ठ वा मट्टीके ढेलोंसे बालक परस्पर युद्ध करैं ॥ १६० ॥ तो दीर्घदर्शियोंने राजाकेलिये घोर भय होताहै ऐसा कहाहै. स्त्री, बालक, माता अपने स्वभावसे जो बात कहैं सो सत्य होजातीहै क्योंकि, यह गुप्त ( सरस्वती ) बातहै ॥ १६१ ॥

## अथोत्पातदोषाऽपवादः ।

स्वस्वशांत्या होमजपैर्विनश्यंति च सर्वशः ॥
सप्ताहाभ्यंतरे वृष्ट्या शुभया वा न दुःखदाः ॥ १६२ ॥

अब उत्पातदोषापवाद लिखतेहैं—अपनी अपनी शांति करनेसे और होम, जप करनेसे सब उत्पातोंका अशुभ फल नाशको प्राप्त होजाताहै और उत्पात होनेसे सात दिनके भीतर जलकी वर्षा होय तो दुःखदायक नहीं होताहै अर्थात् उत्पातका अशुभफल नष्ट होजाताहै ॥ १६२ ॥

## अथोत्पातानामुपसंहाराः ।

भ्रांतिश्च धूमकेतुश्च दिग्दाहो भूमिकंपकः ॥ भुवो गर्त्तश्च निर्घात उल्कापातादयोऽपरे ॥ १६३ ॥ यस्मिन्देशे प्रजा-यन्ते महोत्पाता महाभयाः ॥ प्रजापीडा भवेत्तत्र विनाशः पृथिवीपतेः ॥ १६४ ॥ तदा शांतिर्विधातव्या देशे ग्रामे पुरेऽखिलेः ॥ शांत्या दोषा विनश्यंति त्वन्यथा रिष्टमद्भु-तम् ॥ १६५ ॥

अब उत्पातोंका उपसंहार लिखतेहैं—भ्रांति, धूम्रकेतु, दिग्दाह, भूकम्प, भूमिगर्त्त, निर्घात, उल्कापातादि अन्य महोत्पात ॥ १६३ ॥

जिस देशमें होतेहैं उस देशमें महाभय, प्रजापीडा, राजाका विनाश होताहै ॥ १६४ ॥ इसी कारण देशमें, ग्राममें, पुरमें सब मनुष्योंको शांति करनी चाहिये. क्योंकि, शांति करनेसे सब दोष विनाशको प्राप्त होजातेहैं अन्यथा अद्भुत अरिष्ट होताहै ॥ १६५ ॥

## अथ काकस्पर्शफलम् ।

मस्तके वायसस्पर्शे दारिद्र्यं मरणं कलिः ॥ कट्यां स्कंधे महाभीती रिष्टं चैव प्रकीर्त्तितम् ॥ १६६ ॥ योषितां मस्तके भर्तुर्विनाशो वा सुतस्य च ॥ १६७ ॥

अब काकस्पर्शका फल लिखतेहैं—मस्तकपर कौएका स्पर्श हो जाय तो दारिद्र्य, मरण तथा कलह होतीहै और कमर अथवा कन्धेपर स्पर्श होजाय तो महाभय तथा रिष्ट होताहै ॥ १६६ ॥ और यदि स्त्रियोंके मस्तकपर कौएका स्पर्श होजाय तो भर्त्ता वा पुत्रका विनाश होताहै ॥ १६७ ॥

## अथ कदाचित् काकस्पर्शेऽपि दोषाऽभावः ।

वृक्षाधो वाथ सिद्धान्नभक्ष्ये दध्यादियोगतः ॥ काकस्पर्शो न दोषायाऽकस्माच्चेद्दूषणं तदा ॥ १६८ ॥ षण्मासाभ्यंतरे मृत्युः काकमैथुनदर्शने ॥ तद्दोषशांतये ककशांतिं कुर्याद्विचक्षणः ॥ १६९ ॥ कपोतो वायसः पल्ली सरठो मूर्ध्नि चेत्पतेत् ॥ षण्मासाभ्यंतरे तस्य स्वामिनो वा मृतिस्तदा ॥ ॥ १७० ॥ इत्युत्पातलक्षणफलम् ॥

अब कदाचित्काकस्पर्शमें भी दोषाभाव लिखतेहैं—वृक्षके नीचे अथवा पक्वान्नको खाताहुआ अथवा दध्यादिके साथ खाते समय कौआ मस्तकादि अंगोंका स्पर्श करै तो दोष नहीं होताहै ॥ १६८ ॥ और जो काकमैथुनका दर्शन होय तो छह महीनेके भीतर मृत्यु होतीहै, इस कारणसे बुद्धिमानको चाहिये कि, उसका दोष दूर

करनेके लिये काकशांति करे ॥ १६९ ॥ कबूतर, कौआ, छिपकली, कर्कंटा इनमेंसे कोईएक शिरपर गिरे तो छह महीनेके भीतर उसके स्वामीकी मृत्यु होतीहै ॥ १७० ॥ ॥ इति उत्पातलक्षण ॥

## अथ छिक्काफलम् ।

औषधेऽध्ययने वादे वाहने शयनेऽशने ॥ बीजवापे बुधैः प्रोक्तं शोभनं सप्तसु क्षुतम् ॥ १७१ ॥ मृत्युर्वह्निभयं हानिस्तुष्टिर्द्रव्यागमः सुखम्॥क्लेशोऽर्थागमनं प्रोक्तं दिक्षु छिक्काफलं क्रमात् ॥ यामार्द्धसंख्यकाष्ठातो विज्ञेयं च पृथक् पृथक् ॥ १७२ ॥

अब छिक्काफल लिखतेहैं—औषध खाना, बनाना, पढना, वाद-विवाद करना, सवारीपर चढना, शयन करना, भोजन करना, बीज बोना इन सात कार्योंमें पंडितोंने छींकको शुभ कहाहै ॥१७१॥ मृत्यु, अग्नि, भय, हानि, तुष्टि, द्रव्यागम, सुख, क्लेश, अर्थागम पूर्वादि आठ दिशाओंमें क्रमसे छींक होय तो उक्तफल होताहै. आधेप्रहरकी गिनती लगायकर पूर्वादि दिशाओंमें छींकका यह उक्तफल पृथक् पृथक् जानलेना चाहिये ॥ १७२ ॥

## अत्रोदाहरणं यथा।

आद्येर्द्धप्रहरे प्राच्यां द्वितीयेऽग्निदिशि क्रमात् ॥
तृतीये याम्यदिग्भागे फलमुक्तं विचक्षणैः ॥ १७३ ॥

यहां उदाहरण लिखतेहैं—सूर्योदयसे आधे प्रहरके भीतर पूर्वदिशामें छींक होय तो पूर्वोक्तफल जाने. तदनंतर आधे प्रहरके भीतर आग्नेयमें फिर आधे प्रहर दक्षिणमें, उससे आगे आधे प्रहर नैर्ऋत्यमें छींक होय तो पूर्वोक्तफल होताहै. इसी प्रकार सब दिशाओंकी छींकका फल विचार लेना चाहिये. ऐसा पंडितोंने कहाहै ॥ १७३ ॥

## अथार्घकांडः । तत्रादौ वर्षे राजादिसप्तनाथविचारः ।

चैत्रे मासि सिते पक्षेऽर्कोदये प्रतिपत्तिथौ ॥ यो वासरः स राजा स्यात्तस्मिन्वर्षे ततः फलम् ॥ १७४ ॥ मेषेऽर्कस्य प्रवेशे यो वारो मंत्री स कथ्यते ॥ चापे धान्यपतिर्ज्ञेय आर्द्रायां जलदाधिपः ॥ १७५ ॥ रसाधिपस्तुलायां स्यात्कर्के सस्यपतिस्तथा ॥ मकरे स्वर्णरत्नादिनीरसेशो बुधैः स्मृतः ॥ १७६ ॥

अब अर्घकांड लिखतेहैं-तहां पहिले वर्षके राजादि सप्तनाथ विचार लिखतेहैं-चैत्रमासके शुक्लपक्षकी प्रतिपदाको सूर्योदयके समय जो वार होय वहही उस वर्षका राजा होताहै, उससे सालका फल विचारै ॥१७४॥ मेषके सूर्यकी संक्रांति जिस वारमें लगै वहही वार मंत्री कहाताहै और जिस वारमें धनुकी संक्रांति लगै वहही वार धान्यपति कहाताहै और जिस दिन आर्द्रा लगै वह वार मेघाधिप होताहै ॥१७५॥ जिस वारमें तुलाकी संक्रांति लगै वह वार रसाधिप होताहै और कर्ककी संक्रांतिका वार शस्याधिप होता है और मकरकी संक्रांतिका वार स्वर्णरत्नाद्यधिपति तथा नीरसाधिपति होताहै ॥ १७६ ॥

## अथ विंशोपकानयनम् ।

शके त्रि ३ घ्ने हृते शैलै ७ र्लब्धं स्थाप्यं पृथक्क्वचित्॥ शेषं द्वि २ घ्नं शरै ५ र्युक्तं वर्षा स्याच्च ततः पुनः ॥ १७७ ॥ लब्धं शाकं प्रकल्प्यैवं कर्तव्या प्रोक्तवत्क्रिया ॥ धान्यं २ तृणं ३ ततः शीत ४ मुष्ण ५ मारुत ६ वृद्धयः ७ ॥ नाशोथ ८ विग्रहश्चैवं जायंते क्रमशस्त्विमे ॥ १७८ ॥

अब विंशोपकानयन लिखतेहैं-शाकेको तीन गुणा करके सातका भाग देनेसे जो लब्ध मिलै उसको कहीं अलग स्थापित करै

शेषरहे अंकको दोगुणा करके उसमें पांच जोड देवे जो अंक होय सो उतने विश्वे वर्षा होतीहै ॥ १७७ ॥ और फिर पूर्वोक्त लब्ध जो कि, अलग स्थापितहे उनको शाका मानकर उक्तवत् क्रिया करनेसे धान्य २, तृण ३, शीत ४, उष्ण ५, वायु ६, वृद्धि ७, नाश ८, विग्रह ९ इन सबके विश्वा इसी क्रमसे बनजातेहैं ॥ १७८ ॥

## अथ सर्वनिष्पत्तिर्धर्मसत्यके च।

वर्षादिनवकस्याथ योगे दशहृते पुनः ॥
तल्लब्धं निष्पत्तिरुक्ता सार्धार्द्धं धर्मसत्यके ॥ १७९ ॥

अब सर्वनिष्पत्ति और धर्म तथा सत्य लिखतेहैं—वर्षादिक जो नौ वस्तु हैं तिनके सब विश्वोंको जोडकर दशका भाग देनेसे जो लब्ध मिले सो (निष्पत्ति) सिद्धिके विश्वे निकलतेहैं और फिर निष्पत्तिके आधे विश्वे धर्म और धर्मके आधे विश्वे सत्य बन जाताहै ॥ १७९ ॥

## अथ क्षुधाद्यानयनम्।

शाके सप्त ७ गुणे नंदे ९ भक्ते लब्धं तु तत्कचित् ॥
निधाय द्विगुणं शेषं सैकं क्षुत्स्यात्ततः पुनः ॥ १८० ॥
लब्धं शाकं प्रकल्प्यैवं कर्तव्या प्रोक्तवत्क्रिया ॥ तृषा २
निद्रा ३ तथाऽलस्य ४ मुद्यमः ५ शांतिरेव ६ च ॥१८१॥
क्रोधो ७ दंडो ८ ऽथ मित्रत्व ९ मुत्सवः १० पाप ११-
पुण्यके १२ ॥ १८२ ॥

अब क्षुधादि आनयन लिखतेहैं—शाकेको सात गुणा करके नौका भाग देनेसे जो लब्ध मिले. उसको कहीं अलग स्थापित करदेवे और शेष रहे अंकको दूना करके उसमें एक और जोडदेवे तो क्षुधाके विश्वे निकल आतेहैं ॥ १८० ॥ और उसी लब्धको इसी प्रकार शाका मानकर पूर्वोक्त क्रिया करनेसे तृषा २, निद्रा ३, आलस्य ४, उद्यम ५

शांति ६, ॥१८१॥ क्रोध ७, दंड ८, मित्रत्व ९, उत्सव १०, पाप ११, पुण्य १२ इन सबके विश्वे निकलतेहैं ॥ १८२ ॥

## अथ प्रकारांतरेण क्षुधाद्यानयनम्।

शाके वेदै ४ र्हते शैलै ७ र्भक्ते लब्धं च पूर्ववत् ॥ शेषं च द्विगुणं सैकं १ क्षुधा १ तृष्णा २ सुषुप्तिका ३ ॥ १८३ ॥ आलस्य ४ मुद्यमः ५ शांतिः ६ क्रोधो ७ लोभोऽ८ थ भेदकः ९ ॥ दंडोऽथ १० मैथुनं ११ चौर्यं १२ रसनिष्पत्तिरेव १३ च ॥ १८४ ॥ फलनिष्पत्ति १४ रुत्साहः १५ पुण्यं १६ पापं १७ तथैव च ॥ सर्वनिष्पत्ति १८ रित्येवं संपत्तिश्च १९ यथाक्रमात् ॥ १८५ ॥

अब प्रकारान्तरसे क्षुधादिका आनयन लिखतेहैं–शाकेको चारसे गुणा करके सातका भाग देनेपर जो लब्ध मिलैं तिनको अलग रखदेवे और शेषको दूना करके उसमें एक और जोडदेवे तो क्षुधाके विश्वे निकलतेहैं और फिर लब्धांकको शाका मानकर पूर्वोक्त क्रिया करनेसे तृषा २, निद्रा ३ ॥ १८३ ॥ आलस्य ४, उद्यम५, शांति ६, क्रोध ७, लोभ ८, भेद ९, दंड १०, मैथुन ११, चोरी १२, रसनिष्पत्ति १३, फलनिष्पत्ति १४, उत्साह १५, पुण्य १६, पाप १७, सर्वनिष्पत्ति १८, संपत्ति १९ इन सबके यथाक्रमसे विश्वे निकलतेहैं ॥ १८४ ॥ १८५ ॥

## अथोग्रत्वाद्यानयनम्।

शाकश्चाष्टगुणः ८ खेटै ९ र्भक्तो लब्धं च पूर्ववत् ॥ द्वि २-घ्नं शेषं त्रिभि ३ र्युक्तमुग्रत्वं १ च रसोद्भवः२॥१८६॥फलोत्पत्ति ३ स्तथा व्याधी ४ रोगनाश ५ स्तथैव च ॥ आचार ६ श्चाप्यनाचारो ७ मृति ८ र्जन्म ९ ततः परम् ॥ १८७ ॥ चौरोपशमनं १० वह्नेर्भीति ११ रग्निः शमः १२ क्रमात् ॥

अब उग्रत्वादिका आनयन लिखतेहैं–शाकेको आठगुणा करके नौका भाग देनेसे जो लब्ध मिले उसको पूर्ववत् अलग लिखदेवे और शेषांकको दूना करके तीन जोडदेवे तो उग्रत्वके विश्वे निकल आतेहैं फिर अलग लिखेहुए पूर्वोक्त लब्धांकको शाका मानकर पूर्वोक्तवत् क्रिया करनेसे रसोत्पत्ति २, फलोत्पत्ति ३, व्याधि ४, रोगनाश ५, आचार ६, अनाचार ७, मृत्यु ८, जन्म ९ और फिर ॥ १८६ ॥ १८७ ॥ चौरोपशमन १०, अग्निभय ११, अग्नि शांति १२ इन सबके विश्वे यथाक्रमसे निकल आतेहैं ॥

## अथ शलभाद्यानयनम् ।

शाके त्रिघ्ने ३ हृते नंदै ९ र्लब्धं स्थाप्यं तदुक्तवत् ॥ द्विघ्नं २ शेषं त्रिभिर्युक्तं शलभो मूपकस्तथा ॥ १८८ ॥ दैविकं पीतताम्रे च चक्रं च परचक्रकम् ॥ १८९ ॥

अब शलभादिका आनयन लिखतेहैं–शाकेको तीनगुणा करके नौका भाग देनेसे जो लब्ध मिले उसको पहिलेकी न्यॉई अलग स्थापित करदेवे और शेषांकको दोगुणाकरके तीन और जोड़देवे तो टीडीके विश्वे बनजातेहैं और फिर पूर्वोक्त लब्धको शाका मानकर पूर्ववत् क्रिया करनेसे मूषक २ ॥ १८८ ॥ दैविक ३, पीतल ४, ताम्र ५, स्वचक्र ६, परचक्र ७ इन सबके विश्वे निकल आतेहैं ॥ १८९ ॥

## अथ प्रकारांतरेण शलभाद्यानयनम् ।

शैल ७ घ्नो नव ९ हृच्छाकः शेषं द्विघ्नं २ युतं त्रिभिः ३॥ शलभो १ मूपको २ दैवं ३ पीतं ४ ताम्रं ५ स्वचक्रकम्॥ ६ ॥ परचक्रा ७ गमश्चैवं क्रमाज्ज्ञेयं च पूर्ववत् ॥ १९० ॥

अब प्रकारान्तरसे शलभाद्यानयन लिखतेहैं–शाकेको सातगुणा करके नौका भाग देनेसे जो लब्ध मिलें उनको अलग लिख देवे और शेषांकको दोगुणा करके तीन जोडदेवे तो टीड़ीके विश्वे

निकल आतेहैं और फिर लब्धांकको शाका मानकर पूर्वोक्तवत् क्रिया करनेसे मूपक २, दैव ३, पीतल ४, ताम्र ५, स्वचक्र ६, परचक्र ७ इन सवके विश्वे क्रमसे जानेजातेहैं ॥ १९० ॥

## अथोद्भिज्जादिप्राण्यानयनम् ।

शके वाणै ५ नगै ७ रर्कै १२ रीशै ११ र्निघ्ने पृथक्पृथक् ॥ रामभक्तेऽवशेपं यद्द्विघ्नं २ पंच ५ युतं क्रमात् ॥ १९१ ॥ उद्भिज्जः १ स्वेदज २ श्चैव जरायुः ३ प्रभवोंऽडजाः ४ ॥ १९२ ॥

अव उद्भिज्जादिप्राणियोंका आनयन लिखतेहैं—शाकेको चारजगह लिखकर क्रमसे पांच ५, सात ७, वारह १२, ग्यारह ११ से अलगअलग गुणा करदेवे और फिर अलगअलग तीनका भाग देवे जो शेपांक वचे उनको अलगअलग दोसे गुणा करके चारोंजगह पांचपांच जोड़ देवे तो क्रमसे उद्भिज्ज १, स्वेदज २, जरायुज ३, अंडज ४ इन सवके विश्वे निकल आतेहैं ॥ १९१ ॥ १९२ ॥

## अथ युगानां प्रमाणम् ।

द्वात्रिंशद्भिः सहस्रैश्च युक्तं लक्षचतुष्टयम् ॥ प्रमाणं कलिवर्पाणां प्रोक्तं पूर्वैमहर्पिभिः ॥ १९३ ॥ युगानां कृतमुख्यानां क्रमान्मानं प्रजायते ॥ कलेर्मानं क्रमान्निघ्नं चतु ४ स्त्रि३ द्वि २ मितैस्तदा ॥ १९४ ॥ कृतमानम् १७२८००० ॥ त्रेतामानम् १२९६००० । द्वापरमानम् ८६४००० ॥ कलिमानम् ४३२००० ॥ महायुगप्रमाणम् ४३२०००० ॥

अव युगोंका प्रमाण लिखतेहैं—चारलाखवत्तीसहजार ४३२००० वर्ष कलियुगका प्रमाणहै ऐसा पूर्वमहर्पियोंने कहाहै ॥ १९३ ॥ और कलियुगके वर्षप्रमाणको क्रमसे चार, तीन, दोसे गुणा करदेनेपर सत्ययुग, त्रेता, द्वापर युगका प्रमाण वनजाताहै ॥ १९४ ॥ सत्ययु-

गका प्रमाण १७२८०००। त्रेतायुगका प्रमाण १२९६०००। द्वापरयुगका प्रमाण ८६४०००। कलियुगका प्रमाण ४३२००० वर्षोंका है॥

## अथ गतकलिमानानयनम्।

खगशैलेंदुरामा ३१७९ न्वैर्युक्ताः शाकाः कलेर्गताः ॥
तैर्विहीनं कलेर्मानं शेषं शेषकलेर्मितिः ॥ १९५ ॥

अब गतकलिमान लानेकी विधि लिखतेहैं—शाकेमें ३१७९ इकतीससौ उनासी जोडदेनेसे कलियुगके गतवर्षोंका प्रमाण निकल आताहै और कलियुगका प्रमाण चार लाख बत्तीस हजारमेंसे गतकलिके वर्ष घटाय देनेसे जो शेष बचै सो कलियुगके शेषवर्ष होतेहैं ॥ १९५ ॥

## अथ धर्मानयनम्।

खाभ्रखाभ्रांकवेदैश्च ४९०००० कलिशेषसमा युताः ॥
कलिमानेन संभक्ता यल्लब्धं धर्मराशयः ॥ १९६ ॥

अब धर्म्मानयन लिखतेहैं—कलियुगके शेषवर्षोंमें चार लाख नब्बे हजार ४९०००० जोडकर ( कलिमान ) चारलाख बत्तीसहजारका भाग देनेसे जो लब्ध मिलै सो धर्मकी राशि अर्थात् विश्वे होतेहैं ॥ १९६ ॥

## अथ प्रकारांतरेण धर्मज्ञानम्।

शाकार्द्धं च युतं जीवराशिभिरुद्धृते शके ॥
लब्धं पुण्यं च तन्न्यूना विंशतिः पापमुच्यते ॥ १९७ ॥

अब प्रकारान्तरसे धर्मज्ञान लिखतेहैं— शाकेके आधेको बृहस्पतिकी राशिमें जोड़कर तीनका भाग देनेसे जो लब्ध मिलै सो पुण्य और उसी पुण्यको बीसमें घटादेवे तो शेषको पापके विश्वे जानै ॥ १९७ ॥

## अथायव्ययानयनार्थे ध्रुवांशकाः ।

रसा ६ स्तिथ्यो १५ गजाः ८ शैलचंद्रा १७ नंदेंदव १९ स्तथा ॥ स्वर्गा २१ दिशः १० क्रमाज्ज्ञेया रव्यादीनां ध्रुवा इमे ॥ १९८ ॥

अब आयव्यय आनयनार्थ ध्रुवांशक लिखतेहैं–छह ६, पंद्रह १५ आठ ८, सत्रह १७, उन्नीस १९, इक्कीस २१, दश १० ये ध्रुवांक क्रमसे सूर्यादि ग्रहोंके कहेहैं ॥ १९८ ॥

## अथ मेषादिराशीनामायव्ययाः ।

निजराशिपतेर्वर्षस्वामिनो ध्रुवयोगके ॥ त्रिघ्ने ३ बाण ५ युते भक्ते तिथिभिः १५ शेषसंमिताः ॥ १९९ ॥ आयाः स्युस्त्रिगुणे ३ लब्धे शरा ५ ढ्यास्तिथिभि१५र्हृते ॥ शेषे व्ययाः क्रमात्स्वस्य राशीनां कथिता बुधैः ॥ २०० ॥

अब मेषादिराशिओंके आयव्यय लिखतेहैं–अपनी जन्मराशिके स्वामीका ध्रुवांक और संवत्सरके राजाका ध्रुवांक इन दोनोंको जोडकर तीनगुणा करनेपर जो अंक होय उसमें पांच जोड़कर १५ पंद्रहका भाग देनेसे जो शेष बचे वह ( आय ) लाभ होताहे और पंद्रहका भाग देनेसे जो लब्ध मिले उनको तीनगुणा करके पाँच जोडदेवे और पंद्रहका भाग देवे जो शेष बचे सो खर्च होताहे इसी प्रकार क्रमसे अपनी अपनी राशियोंका आयव्यय जाने ऐसा पंडितोंने कहाहे ॥ ११९ ॥ २०० ॥

## अथ शकात्सुभिक्षादिज्ञानम् ।

शके त्रिघ्ने ३ युते बाणैः ५ शैले ७ भक्तेऽथ शेषकैः ॥ क्रमान्मध्यं १ सुभिक्षं २ च दुर्भिक्षं ३ च सुभिक्ष ४-कम् ॥ २०१ ॥ महर्घं ५ समता ६ ज्ञेया चैकतो रौरवं तु खे ० ॥ २०२ ॥

अब शाकेसे सुभिक्षादिज्ञान लिखतेहैं—शाकेको तीनगुणा करके पांच जोडदेवे फिर उस योगांकमें सातका भाग देनेसे एक बचै तो मध्यम १, दो बचैं तो सुभिक्ष २, तीन बचैं तो दुर्भिक्ष ३, चार बचैं तो सुभिक्ष ४, पांच बचैं तो महर्घ ५, छह बचैं तो समता ६ और शून्य बचै तो घोरता जानै ॥ २०१ ॥ २०२ ॥

## अथ संवत्सरात्सुभिक्षादिज्ञानम् ।

त्रिघ्ने ३ संवत्सरे युक्ते शरैः ५ भक्तेऽथ सप्तभिः ७ ॥ चतुर्द्विकमिते ४ । २ शेषे सुभिक्षं विपुलं भवेत् ॥ २०३ ॥ त्रि ३ पंचके ५ च दुर्भिक्षं षड्भू ६ । १ संख्ये च मध्यमम् ॥ शून्ये तु रौरवं ज्ञेयं फलं वर्षे बुधैः स्मृतम् ॥२०४॥

अब संवत्सरसे सुभिक्षादिज्ञान लिखतेहैं—संवत्सरको तीनगुणा करके उसमें पांच जोडदेवे और फिर सातका भाग देनेसे चार, दो शेष बचैं तो बहुत सुभिक्ष होताहै ॥ २०३ ॥ और तीन, पांच बचैं तो दुर्भिक्ष और छह वा एक बचै तो मध्यम और शून्य शेष बचै तो रौरव फल जानै ऐसा पंडितोंने कहाहै ॥ २०४ ॥

## अथ प्रकारांतरेण संवत्सरात्फलम् ।

द्वि २ घ्नः संवत्सरो रामै ३ र्हीनो भक्तो नगै ७ स्ततः ॥ शेषे बाणमिते युग्मे २ सुभिक्षं हायने भवेत् ॥ २०५ ॥ वेदे ४ चंद्र १ मिते ज्ञेयं दुर्भिक्षं खे० तु रौरवम् ॥ रसा ६ ऽनल ३ मिते मध्यमेतदर्घफलं बुधैः ॥ २०६ ॥

अब प्रकारान्तरसे संवत्सर परसे सुभिक्षादि ज्ञान लिखतेहैं—संवत्सरको दूना करके उसमेंसे तीन घटाय देवे शेषमें सातका भाग देनेसे पांच वा दो बाकी बचैं तो उस वर्षमें सुभिक्ष होताहै ॥ २०५ ॥ और चार अथवा एक शेष बचै तो दुर्भिक्ष और शून्य

बचै तो भयंकर और छह वा तीन शेष वचैं तो मध्यम फल होताहै ॥ २०६ ॥

## अथ वर्षे राजादीनां संक्षेपात्फलम् ।

राजाऽमात्यादिकानां च वच्मि संक्षेपतः फलम् ॥ गुरुशुक्रेंदवोऽधीशाः संति चेज्जनसौख्यदाः ॥ २०७ ॥ सुभिक्षं शोभना वृष्टिर्देशे स्वास्थ्यं प्रकुर्वते ॥ शनिभौमौ प्रकुर्वातां दुर्भिक्षं विग्रहं भयम् ॥२०८॥ अल्पसौख्यप्रदः सोम्दः खलु- दुःखप्रदो रविः ॥ फलं सविस्तरं चैषां विज्ञेयं संहितादिषु ॥ २०९ ॥ तथा प्रभवमुख्यानां हायनानां पृथक्पृथक् ॥ नास्माभिर्लिख्यते चात्र ग्रंथविस्तरभीतितः ॥ २१० ॥

अब वर्षमें राजादिकोंका संक्षेपसे फल लिखतेहैं—यदि बृहस्पति, शुक्र, चंद्रमा इनमेंसे कोई वर्षका राजा होय तो मनुष्योंको सुखदायक होताहै ॥ २०७ ॥ और सुभिक्ष, शोभन वर्षा, देशमें ( स्वास्थ्य ) नीरोगता रहतीहै और शनि वा मङ्गल संवत्सरके राजा होंय तो दुर्भिक्ष, विग्रह, भय रहताहै ॥२०८॥ बुध राजा होय तो अल्पसौख्यदायक होताहै, सूर्य राजा होय तो दुःखदायक होतेहैं; इन सब ग्रहोंका विस्तारसहित फल संहितादि ग्रंथोंमेंसे जान लेना चाहिये॥ ॥ २०९ ॥ तथा पृथक्पृथक् प्रभवादिक संवत्सरोंकाभी फल संहितादि ग्रथोंसेही जानना चाहिये हमने यहांपर ग्रंथविस्तारके भयसे नहीं लिखाहै ॥ २१० ॥

## अथ दीपमालिकायोगे नेष्टं फलम् ।

दर्शे चायुष्मतौ स्वातौ पापाहे मासि कार्त्तिके ॥
प्रदोषे चेत्प्रजापीडा राजयुद्धाद्युपद्रवाः ॥ २११ ॥

अब दीपमालिकाके योगमें नेष्टफल लिखतेहैं—कार्त्तिकमासमें अमावास्याके दिन प्रदोषके समय स्वातीनक्षत्र और पापग्रहका वार

तथा आयुष्मान् योग होय तो प्रजापीडा तथा राजयुद्धादि उपद्रव होतेहैं ॥ २११ ॥

## अथ ज्येष्ठप्रतिपदि योगः ।

ज्येष्ठे शुक्ले तिथावाद्ये चंद्रेज्यभृगुवासरे ॥
सुभिक्षं शोभना वृष्टिर्दुर्भिक्षं पापवासरे ॥ २१२ ॥

अब ज्येष्ठप्रतिपदाके योग लिखतेहैं–ज्येष्ठमासमें शुक्लपक्षकी प्रतिपदाको चंद्र वा बृहस्पति वा शुक्र वार होय तो सुभिक्ष तथा सुन्दर वर्षा होतीहै और पापवार होय तो दुर्भिक्ष होताहै ॥ २१२ ॥

## अथाषाढद्वितीयानवमीयोगः ।

आषाढे शुक्लपक्षे च द्वितीयानवमीदिने ॥ चन्द्रेज्यभृगुवाराः स्युः सुवृष्टिश्च समर्घता ॥ २१३ ॥ बुधे साम्यं रवौ तापः कुजे वृष्टिर्न जायते ॥ शनिवारे प्रजापीडा दुर्भिक्षं रौरवं तदा ॥ २१४ ॥

अब आषाढ शुक्लमें द्वितीया और नवमीका योग लिखतेहैं–आषाढमासमें शुक्लपक्षकी द्वितीया वा नवमीके दिन चंद्रमा, बृहस्पति वा शुक्र वार होय तो सुवृष्टि तथा समर्घता होतीहै ॥ २१३ ॥ और बुधवार होय तो समता, रविवार होय तो ताप, मङ्गलवार होय तो अवृष्टि, शनिवार होय तो प्रजापीडा, दुर्भिक्ष तथा भयंकरता होतीहै ॥ २१४ ॥

## अथ शनिराशिफलम् ।

गुर्जरेऽजे १ शनौ पीडा प्रभासे च वृषस्थिते २॥ मरुस्थले च युग्मर्क्षे ३ कर्के ४ काश्मीरमंडले ॥ २१५ ॥ शक्रप्रस्थे च सिंहर्क्षे ५ कन्यास्थे ६ मालवे तथा ॥ तुलादित्रितये पृथ्व्यां दुर्भिक्षं जनपीडनम् ॥ सुभिक्षं मकरे कुंभे मीने सर्व प्रजाक्षयः ॥ २१६ ॥

अब शनिराशिका फल लिखतेहैं-मेषराशिका शनैश्चर होय तो गुर्जरदेशमें पीडा, वृषराशिका शनैश्चर होय तो प्रभासक्षेत्रमें पीडा, मिथुनराशिका शनैश्चर होय तो मारवाडदेशमें पीडा, कर्कका शनैश्चर होय तो काश्मीरदेशमें पीडा ॥ २१५ ॥ सिंहराशिका होय तो दिल्लीके देशमें, कन्याका होय तो मालवदेशमें; तुला, वृश्चिक, धनुका होय तो पृथ्वीपर दुर्भिक्ष तथा मनुष्यपीडा; मकर कुम्भका शनैश्चर होय तो सुभिक्ष और मीनका शनैश्चर होय तो सर्वप्रजाका नाश होताहै ॥ २१६ ॥

## अथ कूर्मचक्रम् ।

कूर्मचक्रे शनिर्मध्ये ततः प्राच्यादिषु क्रमात् ॥ नाशयेत्क्रमतो देशान्कृत्तिकाद्यैस्त्रिभिस्त्रिभिः ॥ २१७ ॥ निजाधिष्ठितभैर्देशानंतर्वेदिमुखां ३ स्ततः ॥ मागधांश्च ६ कलिंगा- ९ दीनवन्तिक १२ मुखांस्तथा ॥ २१८ ॥ ततः कोंकणपौंड्रा १५ दीन्सिंधुसौराष्ट्र १८ कादिकान् ॥ पौलिंदचीनकाद्यांश्च कुरुकाश्मीरमत्स्यकान् ॥ २१९ ॥ खसबाह्लीकलाटा२७द्यान्नवखंडानिमांस्तथा ॥ दृष्ट्वा स्वाधिष्ठितादेशादन्यांश्च यमदिग्गतान् ॥ २२० ॥

अब कूर्मचक्र लिखतेहैं-नौ कोठेका कूर्मचक्र लिखे और कृत्तिकादि तीनतीन नक्षत्र मध्यभागसे लेकर पूर्वादि आठों दिशाओंमें क्रमसे लिखदेवे जिस खंडके तीननक्षत्रोंमेंसे किसी नक्षत्रपर शनैश्चर अधिष्ठित होय उसी देशका नाश करताहै तथा अपने अधिष्ठित देशसे अन्य दक्षिणदेशोंकाभी नाश करताहै. यहांपर सत्ताईस नक्षत्रोंके नौखंड वर्णन कियेगयेहैं जैसे मध्यखंड अन्तर्वेद्यादिक ३, पूर्वदिशाका खंड मागधादिक ६, अग्निकोणका खंड कलिंगादिक ९, दक्षिणका खंड अवन्तिकादिक १२ ॥ २१७ ॥ ॥ २१८ ॥ नैर्ऋत्यका खंड कौंकण पौंड्रादिक १५, पश्चिमकाखंड

सिंधु सौराष्ट्रकादिक १८, वायव्यका खंड पौलिंद चीनादिक २१, उत्तरका खंड कुरु, काश्मीर, मत्स्यकादिक २४ ॥२१९॥ और ईशानका खण्ड, खस वाह्लीक, लाटादिकदेशहैं सो नीचे चक्रमें समझलेने चाहिये ॥ २२० ॥

| | | |
|---|---|---|
| रेवती. अश्विनी, भरणी, खस व ह्रिस्लाटादि देश ईशानखंड | आर्द्रा, पुनर्वसु, पुष्य मगधादि देश. पूर्व खंड | आश्लेषा, मघा, पूर्वाफा कलिंगादि देश आग्नेयखंड |
| शतभिषा, पूर्वाभाद्रपदा, उत्तरा कुरु काश्मीर मत्स्यादिदेश उत्तरखंड. | कृ० रो० मृ अन्तर्वेद्या दिक देश. मध्यखंड | उत्तराफा हस्त, चित्रा अवन्तिकादि देश दक्षिणखण्ड |
| उत्तराषाढा, श्रवण, धनेष्ठा पौलिंद, चीनकादि देश वायव्यखंड | ज्येष्ठा, मूल, पूर्वाषाढा सिंधु सौराष्ट्रकादि देश ", पश्चिमखंड | स्वाति-विशाखा-अनुराधा, कौंस्थ पौंड्रकादिदेश नैर्ऋत्यखंड |

## अथ शनिचारप्रसंगाच्छनिचक्रम्।

शनिभाद्धानिकृच्चैकं १ मुखेऽथो वेदभे ५जयः॥ भुजे दक्षे ततः षड्भि ११ ऋक्षैश्च भ्रमणं ततः ॥२२१॥ भुजे वामेऽब्धि १५ भे रोगो हृत्स्थैः शरमितैः २० श्रियः॥ त्रिभिर्भे २३ मस्तके राज्यं नेत्रे क्षुद्रद्वये २५ सुखम् ॥ भद्वये २७ गुह्यगे मृत्युः शनिचक्रे फलं क्रमात् ॥ २२२ ॥

अब शनिचारके प्रसंगसे शनिचक्र लिखतेहैं–शनिके नक्षत्रसे जन्मके नक्षत्रतक गिने प्रथम एक नक्षत्र शनैश्चरचक्रके मुखमें लिखे जिसका फल हानिकारक है और फिर चार नक्षत्र दाहिनी भुजामें लिखे जिनका फल विजय और फिर छह नक्षत्र चरणोंमें लिखे जिनका फल भ्रमण ॥ २२१ ॥ और फिर चार नक्षत्र बांई भुजामें लिखे जिनका फल रोग और फिर पांचनक्षत्र हृदयमें लिखे जिनका

फल लक्ष्मी और फिर तीन नक्षत्र मस्तकमें लिखे जिनका फल राज्य और फिर दो नक्षत्र नेत्रोंमें लिखे जिनका फल सुख; तदनन्तर दो नक्षत्र गुदामें लिखे जिनका फल मृत्यु होतीहै ॥ २२२ ॥

## अथ ग्रहचारवशान्महर्घादि ।

सर्वधान्यं महर्घं स्याच्छुक्रक्षेत्रगते कुजे ॥ राहौ मंदे च दुर्भिक्षं शुभं चंद्रग्रहे स्थिते ॥ २२३ ॥ बुधर्क्षे भास्करे चद्रे विरोधो धरणीभुजाम् ॥ तत्रार्कनंदने चंद्रे सर्वधान्यमहर्घता ॥ २२४ ॥ शनौ राहौ शनिक्षेत्रे तृणाऽभावात्पशुक्षयः ॥ विरोधो भूभुजां भौमे वृष्टिः स्याद्भूयसी बुधे ॥ २२५ ॥ कुजर्क्षे राहुमंदज्ञैर्नश्यंति पशवो नराः ॥ महर्घं भृगुपुत्रेण शेषैः खेटैः फलं शुभम् ॥ २२६ ॥ क्रूरा वक्रगताः खेटाः सौम्या यद्यतिचारगाः ॥ तदा भूपक्षयं युद्धं जगद्धोरभयार्दनम् ॥ २२७ ॥

अथ ग्रहचारके वशसे महर्घादि लिखतेहैं-( शुक्रक्षेत्र ) तुला, वा वृषराशिका मंगल होय तो सर्वधान्य मँहगे रहतेहैं और यदि शुक्रक्षेत्री राहु वा शनैश्चर होय तो दुर्भिक्ष रहताहै और जो ( चंद्रमा की राशि ) कर्कके मंगल, राहु, शनेश्चर होंय तो शुभफल होताहै ॥ २२३ ॥ यदि ( बुधकी राशि ) कन्या मिथुनके सूर्य तथा चंद्रमा होंय तो राजाओंमें विरोध होताहै और जो बुधकी राशिके शनेश्चर चंद्रमा होंय तो सब धान्य महँगे रहतेहैं ॥ २२४ ॥ शनि वा राहु ( शनैश्चरकी राशि ) मकर वा कुंभके होंय तो तृणका अभाव होनेसे पशुओंका नाश होताहै और यदि शनिकी राशिपर मंगल होय तो राजाओंमें विरोध होताहै और बुध होय तो बहुत वर्षा होतीहै ॥ २२५ ॥ मंगलकी राशिपर शनैश्चर, राहु, बुध होय तो पशु तथा मनुष्योंका नाश होताहै और मंगलकी राशिपर शुक्र होय

तो सब भाव महंगा रहताहै और शेषग्रह मंगलकी राशिपर होंय तो शुभ फल होताहै ॥ २२६ ॥ यदि क्रूरग्रह वक्रीहोंय और सौम्यग्रह अतिचारी होंय तो राजाओंका नाश तथा युद्ध होताहै और जगत्के लिये घोरभय तथा पीडा होतीहै ॥ २२७ ॥

## अथ प्रतिमाससमर्घज्ञानाय चंद्रोदयज्ञानम् ।

ऊर्ध्वभागे तु विज्ञेया राहुराशिप्रकोष्टकाः ॥ तिर्यग्भागे तु विज्ञेया रविराशिप्रकोष्ठकाः ॥ २२८ ॥ चक्रे तत्रार्कराह्वोश्च घटिकाः परिकीर्तिताः ॥ प्रोह्य दर्शघटीः पष्ट्यां ६० शेषा घट्यो युतास्तथा ॥ २२९ ॥ दिनमानघटीभिस्ता घटीभ्यो राहुसूर्ययोः ॥ अधिकाश्चेत्तदा चंद्रदर्शनं प्रतिपद्यते॥२३०॥

अब प्रतिमासमें अर्घज्ञानके लिये चंद्रोदयज्ञान लिखतेहैं—ऊर्द्धभागमें राहुकी राशिके कोठे जानै और तिरछे भागमें सूर्यकी राशिके कोठे जानै इस प्रकार बनेहुए चक्रमें सूर्य और राहुकी घटी कहीगईहैं सिद्धान्तग्रंथोंमें इस चक्रका वर्णनहै अमावास्याकी घटियोंको साठिमेंसे घटादेवे शेपरही घटियोंमें दिनमानकी घटी जोड़देवे चक्रलिखित राहुसूर्यकी घटियोंके जोड़से पूर्वोक्त घटियोंका जोड़ अधिक होय तो शुक्लपक्षकी प्रतिपदाके दिन चंद्रोदयका दर्शन होताहै और जो कम होय तो चंद्रोदयका दर्शन नहीं होताहै २२८॥२२९॥२३०

## अथ चंद्रस्य शृंगोन्नतिस्तत्फलञ्च ।

चंद्रो याम्योन्नतो मीनमेपगोऽभ्युदितो मतः ॥ समशृंगो वृपे कुंभे शेपभेपूत्तरोन्नतः ॥ २३१ ॥ याम्योन्नते च दुर्भिक्षं विड्वरः स्यात्समे विधौ ॥ सुभिक्षं सौम्यदिग्भागे चोन्नते मृगलाञ्छने ॥ २३२ ॥ शूलाकारे विधौ भीतिः प्रोदिता महती रुता ॥ २३३ ॥

अब चंद्रकी शृंगोन्नति और उसका फल लिखतेहैं-मीन, मेषका चंद्रमा होय तो दक्षिणशृंगोन्नत कहाहै वृष, कुंभ राशिके चंद्रमाका उदय होय तो समशृंग होताहै शेषराशियोंके चद्रमाका उदय होय तो उत्तर शृंगोन्नत होताहै ॥ २३१ ॥ दक्षिणोन्नत चंद्रमा होय तो दुर्भिक्ष और समशृंगोन्नत चद्रमा होय तो मध्यमफल और उत्तर-शृंगोन्नत चंद्रमा होय तो सुभिक्ष होताहै ॥२३२॥ और त्रिशूलाकार चंद्रमाका उदय होय तो महाभय और पुकार होतीहै ॥ २३३ ॥

## अथ रवेर्वामदक्षिणभागयोश्चंद्रोदयफलम् ।

यदि शुक्लद्वितीयायां वामे चंद्रोदयो रवे॰ ॥ शुभं तदाखिले मासि नो शुभ दक्षिणोदये ॥ २३४ ॥ चंद्रोदये बृहत्संज्ञे भवेद्धान्यं समर्घकम् ॥ जघन्यभे महर्घं च ज्ञेयं धान्य समे समम् ॥ २३५ ॥

अब रविके वामदक्षिणभागमे चन्द्रोदयफल लिखतेहैं- याद शुक्लपक्षकी द्वितीयाके दिन सूर्यसे वाम भागमें चंद्रमाका उदय होय तो संपूर्णमासमे शुभ फल होताहै और सूर्यसे दक्षिणभागमे चंद्रमाका उदय होय तो शुभ फल नहीं होताहै ॥ २३४ ॥ बृहत्संज्ञक नक्षत्रोंमे चंद्रमाका उदय होय तो अन्नसस्ता और जघन्यसंज्ञक नक्षत्रोंमे चंद्रमाका उदय होय तो अन्नका भाव महँगा और समसंज्ञक नक्षत्रोमे चंद्रमाका उदय होय तो अन्नका भा। सम रहताहै ॥ २३५ ॥

## अथ प्रतिमासेदर्शफलम् ।

शुभवारान्विते दर्शे स्यात्सुभिक्षं प्रजासुखम् ॥
पापवारान्विते दु:खं तथा धान्यमहर्घता ॥ २३६ ॥

अब प्रतिमासमे दर्शका फल लिखतेहे-यदि शुभवारसे युक्त अमावास्या होय तो सुभिक्ष और प्रजाको सुख होताहै और जो

पापवारयुक्त अमावास्या होय तो दुःख तथा धान्य महँगा रहताहै ॥ २३६ ॥

## अथैकमासे पञ्चवारफलम्।

शुक्लाद्यमासि चेत्पंच पापखेटस्य वासराः ॥ प्रजापीडा भवेत्तत्र धान्यस्यापि महर्घता ॥ २३७ ॥ मासे पंच शुभा वारा यद्येकस्मिन्प्रजायते ॥ सुभिक्षं सर्वसस्यानां तदा सर्वसुखी जनः ॥ २३८ ॥

अब एकमासमें पांचवारका फल लिखतेहैं–शुक्लप्रतिपदासे लेकर अमावास्या तक मासमें पापग्रहोंके पांचवार पडें तो उस मासमें प्रजापीडा और अन्नका भाव महँगा रहताहै ॥ २३७ ॥ और यदि एकमासमें पांच शुभवार पडें तो सम्पूर्ण अन्नोंका सुभिक्ष और सबजन सुखी रहतेहैं ॥ २३८ ॥

## अथ प्रतिमासं संक्रांतिवशात्समर्घमहर्घज्ञानम्।

सुभिक्षं संक्रमे सौम्यवारेऽधिकमुहूर्त्तके ॥ महर्घं पापवारे वा मुहूर्ते चाक्षभू १५ मिते ॥ २३९ ॥ पूर्वसंक्रमभाद्द्वित्रिमिते भे संक्रमे रवेः ॥ सुभिक्षं स्याच्चतुःपंचमिते भे च महर्घता॥ षष्ठे भे संक्रमे चातिदुर्भिक्षं रौरवं भवेत् ॥ २४० ॥

अब प्रतिमासमें संक्रातिके वशसे समर्घमहर्घज्ञान लिखतेहैं–यदि शुभवारमें पैंतालीस मुहूर्त्त संक्रांति होय तो सुभिक्ष होताहै और पापवारमें पंद्रह १५ मुहूर्त्त संक्रांति होय तो अन्नका भाव महँगा रहताहै ॥ २३९ ॥ पहिली संक्रातिके नक्षत्रसे दूसरे तीसरे नक्षत्रमें सूर्यकी संक्राति होय तो सुभिक्ष और चौथे पांचवें नक्षत्रमें सूर्यकी संक्रान्ति होय तो अन्नका भाव महँगा और छटे नक्षत्रमें सूर्यकी सांक्रांति होय तो अतिदुर्भिक्ष तथा भयंकरता होतीहै ॥ २४० ॥

## अथ ग्रीष्मशारदधान्यनिष्पत्तिज्ञानम् ।

वृषसंक्रमणे भानोः केंद्रस्वाय १।४।७।१०।२।११ गतैः शुभैः ॥ शारदीधान्यनिष्पत्तिरुत्तमा कथिता बुधैः ॥ २४१ ॥ पापैरवस्थितैः स्वल्पा मिश्रैर्मिश्रा प्रकीर्तिता ॥ पापे द्यून ७ गते नश्येदुत्पन्नमपि सस्यकम् ॥ २४२ ॥ द्यूनशत्रु ७।६ गते पापे निष्पत्तिः स्वल्पका भवेत् ॥ इत्थं वृश्चिकसंक्रांतौ विज्ञेयं ग्रैष्मधान्यकम् ॥२४३॥

अब ग्रीष्मशारदधान्यनिष्पत्तिज्ञान लिखतेहैं-वृषके सूर्यकी संक्रांति लगनेके समय केंद्र १।४।७।१०। और दूसरे ग्यारहवें स्थानमें शुभग्रह होंय तो शरत्कालके अन्नकी उत्पत्ति उत्तम होतीहै ऐसा पंडितोने कहाहै ॥ २४१ ॥ और जो उक्तस्थानोंमें पापग्रह बैठे होंय तो शरत्कालके अन्नकी उत्पत्ति थोडी होतीहै और जो शुभ तथा पापग्रह दोनों मिलेजुले बैठे होंय तो पूर्वोक्त अन्नकी उत्पत्ति मध्यम होतीहै और यदि सातवें स्थानमें पापग्रह होंय तो उत्पन्न हुआभी अन्न नष्ट होजाताहै ॥ २४२ ॥ और सातवे तथा छठे स्थानमें पापग्रह होंय तो थोडा अन्न उत्पन्न होताहै. इस प्रकार वृश्चिककी संक्रान्ति लगनेके समय ग्रीष्म कालके अन्नकी उत्पत्ति जानलेनी चाहिये ॥ २४३ ॥

## अथ संग्रहसमयः ।

चापादित्रितये सूर्ये सौम्यैर्युक्तेक्षिते ग्रहैः ॥ शरद्धान्यं समर्घं स्याद्ग्राह्यं तद्धान्यजीविभिः ॥ २४४ ॥ पापैर्युक्तेक्षिते धान्यं महर्घं जायतेऽखिलम् ॥ एवं मेषत्रिगे ग्रैष्मे विधौ ज्ञेयं विचक्षणैः ॥ २४५ ॥

अब संग्रहके समय लिखतेहैं-धनु, मकर, कुंभके सूर्य शुभग्रहोंसे दृष्ट वा युक्त होंय तो शरत्कालका अन्न मन्दा होताहै. भँडसाल

करनेवालोंको ग्रहण करना चाहिये ॥२४४॥ और जो सूर्य पापग्रहोंसे युक्त वा दृष्ट होंय तो सब अन्नोंका भाव महँगा होजाताहै इसी प्रकार मेष, वृष, मिथुन राशिके चंद्रमासे ग्रीष्मकालके अन्नका विचार करै ऐसा पंडितोंको जानना चाहिये ॥ २४५ ॥

## अथ संक्रांतिवशाद्दर्शपौर्णमासयोरुत्पातादिवशाद्धान्यादीनां समर्घमहर्घताज्ञानम् ।

ग्रैष्मं सस्यं १ ततो मूलं २ रसधान्यं ३ घृतादिकम् ४ ॥ हेमाद्यं ५ तुरगो ६ वस्त्रं ७ मणिः ८ काचां ९ बु १० धान्यकम् ११ ॥२४६॥ मूलं १२ च क्रमतो ज्ञेयं मेषाद्यर्के खलेक्षिते॥दर्शे वा पूर्णिमायां चेदुपरागोतिवर्षणम् ॥२४७॥ परिवेषस्तथा दंड उल्कापाताद्युपद्रवाः ॥ जायंतेऽत्र तदा तेषां वस्तूनां च महर्घता ॥ २४८ ॥ रवौ सौम्येक्षिते ज्ञेय उत्पातोत्र समर्घता ॥

अब संक्रांतिके वशसे तथा दर्श और पौर्णमासियोंमें उत्पातादि वशसे धान्यादिकोंका समर्घताज्ञान लिखतेहैं—ग्रीष्मकालकी खेती १, मूल २, रसधान्य ३, घृतादिक ४, सुवर्णादिक ५, घोड़ा ६, वस्त्र ७, मणि ८, काच ९, जल १०, अन्न ११ ॥ २४६ ॥ मूल १२ ये वस्तुएँ क्रमसे मेषादिराशियोंके सूर्यको पापग्रह देखते होंय तो महँगी होजातीहैं. यदि अमावास्या वा पौर्णमासीके दिन ग्रहण अथवा अतिवर्षा होय अथवा सूर्यचंद्रपर पारस बैठे, दंडका उदय होय, उल्कापात होय इत्यादि उपद्रव होंय तो पूर्वोक्त वस्तुओंका भाव महँगा होजाताहै ॥ २४७ ॥ २४८ ॥ और सूर्यको शुभग्रह देखते होंय तो उत्पात नहीं होताहै तथा अन्नका भाव मन्दा रहता है ॥

## अथ वृक्षादौ पुष्पफलाद्यैर्धान्यादिनिष्पत्ति-वृष्टिज्ञानम् ।

वृक्षादौ बहुभिः पुष्पैर्महावृष्टिः प्रजायते ॥ यत्र स्वल्पतरा वृष्टिर्दूर्वाभिश्चेक्षवोधिकाः ॥ २४९ ॥ मधूकैर्बहुगोधूमा यवाः स्युर्वटजैः फलैः ॥ सुभिक्षं नागनिंबैः स्याच्छालवृक्षैस्तु शालयः ॥ २५० ॥ अश्वत्थादधिकं धान्यमर्जुनादधिकं जलम् ॥ क्षेममाम्रैश्च पालाशैः कोद्रवा जबुतस्तिलाः॥२५१॥ दुर्भिक्षं खदिरे रोगाः कुटजैः परिकीर्तिताः ॥ २५२ ॥

अब वृक्षादिमें पुष्पफलादि करके धान्यादिनिष्पत्ति और वृष्टिज्ञान लिखतेहैं–वृक्षादिकोंपर बहुत फूल आवें तो महावर्षा होतीहै और थोड़े फूल आवे तो थोडी वर्षा होतीहै और दूब बहुत पैदा होय तो ईख बहुत होतीहै ॥ २४९॥ और महुएपर बहुत फूल फल आवें तो गेहूं अधिक होतेह और बड़के वृक्षपर बहुतसे फल लगें तो जौ अधिक होतेहैं और नागफनी वा नीवमें बहुत फल लगे तो सुभिक्ष होताहै और सालरु वृक्षपर बहुत फल लगें तो धान साठी अधिक होतेहैं ॥ २५० ॥ पीपलके वृक्षोपर बहुत फूलफल आनेसे अन्न अधिक होताहै. अर्जुन वृक्षोपर बहुत फूलफल आनेसे जल अधिक वर्षताहै. आम्रके वृक्षोंपर बहुत फूल फल आनेसे कल्याण अधिक रहता है, ढाक फूले फले तो कोदों अधिक होतेहैं. जामुन बहुत फूले फले तो तिल अधिक होतेहैं ॥ २५१ ॥ खैरके वृक्षपर बहुत फूलफल लगें तो दुर्भिक्ष होताहै और कुटेयाके वृक्षपर बहुत फलफूल आवें तो रोग बहुत होतेहै ॥ २५२ ॥

## अथाषाढ्यां पौर्णमास्यां वायुपरीक्षा ।

आषाढे पूर्णिमायां च प्रदोषे वा दिवानिशम् ॥ प्राच्यां वायोस्तु वृष्टिः स्याद्धान्यनिष्पत्तिरुत्तमा ॥ २५३ ॥ अल्प-

वृष्टिस्तथाऽऽग्नेय्यामग्नेर्भीतिर्महर्घता ॥ अनावृष्टिर्भवेद्याम्यां प्रजापीडा महर्घता ॥ दुर्भिक्षं रौरवं घोरमनावृष्टिश्च नैर्ऋते ॥२५४॥ वारुण्यां च महावृष्टिर्धान्योत्पत्तिस्तु मध्यमा॥वायौ वायुः प्रचंडः स्याद्वृष्टिर्धान्यं च मध्यमम् ॥२५५॥ बहु धान्यं शुभा वृष्टिरुत्तरस्यां सुखी जनः ॥ ऐशान्यां सस्यसंपत्तिर्धनाढ्याः सुखिनो जनाः ॥ २५६ ॥

अब आषाढकी पौर्णमासीमें वायुपरीक्षा लिखतेहैं-आषाढकी पौर्णमासीके दिन प्रदोषके समय अथवा दिनमें वा रात्रिमें पूर्वका पवन चले तो वर्षा और धान्यकी उत्पत्ति उत्तम होतीहै ॥ १५३ ॥ और आग्नेयदिशाका पवन चले तो थोड़ी वर्षा तथा भय और महँगाभाव रहताहै और दक्षिणका पवन चले तो ( अनावृष्टि ) वर्षाका अभाव, प्रजाको पीडा और महर्घता होतीहै और नैर्ऋत्यका पवन चले तो घोर दुर्भिक्ष और भयंकर अनावृष्टि होतीहै ॥२५४॥ और पश्चिमका पवन चले तो महावृष्टि तथा अन्नकी उपज मध्यम होतीहै और वायव्यका प्रचंड पवन चले तो वर्षा तथा मध्यम अन्न होताहै ॥२५५॥ उत्तरका पवन चले तो बहुत अन्न, अच्छी वर्षा होतीहै और मनुष्य सुखी रहतेहै और ईशानका पवन चले तो खेतीकी संपत्ति और मनुष्य धनाढ्य तथा सुखी रहतेहैं ॥ २५६ ॥

## अथाषाढ्यां धान्यादितोलनम् ।

आषाढ्यां सर्वधान्यानि संध्यायां च पृथक्पृथक् ॥ तोलयेद्वर्णमानेन जलादीनपि सर्वशः ॥ २५७ ॥ मंत्रैस्ततोऽभिमन्त्र्याथ निशि तानधिवासयेत् ॥ तोलयेच्च पुनः प्रातस्तेन मानेन दैववित् ॥ २५८ ॥ वृद्धौ वृद्धिः समे साम्यं ह्रासे हानिस्तु तस्य च ॥ २५९ ॥

अब आषाढकी पूर्णिमामें धान्यादितोलन लिखतेहैं—आषाढकी पौर्णमासीको सांयकालमें सब अन्नोंको तथा जल आदि सब वस्तु-

ओंको अलग अलग वर्णमानसे तोलै और फिर उन सब अन्नादि वस्तुओंको मंत्रोंसे अभिमन्त्रित करके रातभर धरे रहनेदेय प्रातः काल होतेही ज्योतिपीपंडित उसी तोलसे उन सब वस्तुओंको फिर तोलै जो अन्न तोलमें वढजाय उसकी वृद्धि और जो समान रहे उसकी समता और जो घटजाय उसकी हानि होतीहै ऐसा जानै ॥ २५७ ॥ २५८ ॥ २५९ ॥

## अथ होलिकावातपरीक्षा ।

होलिकासमये वायौ पूर्वे भूपनृणां सुखम् ॥ याम्यनैर्ऋत्य-दिग्भागे दुर्भिक्षं च पलायनम् ॥ २६० ॥ प्रतीच्यामुत्तरे शैवे सुभिक्षं स्यात्प्रजासुखम् ॥ अग्नेर्भीतिरथाग्नेय्यां वायव्यां वहवोऽनिलाः ॥ २६१ ॥

अव होलिकावातपरीक्षा लिखतेहैं—होली जलानेके समय पूर्वका पवन चलै तो राजा और प्रजाको सुख होताहै और दक्षिण वा नैर्ऋत्य दिशाका पवन चलै तो दुर्भिक्ष तथा ( पलायन ) भागना होताहै ॥ २६० ॥ और पश्चिम उत्तर वा ईशानका पवन चलै तो सुभिक्ष तथा प्रजाको सुख होताहै और अग्निकोणका पवन चलै तो अग्निका भय और वायव्यका पवन चलै तो वहुत पवन चलताहै ॥ २६१ ॥

## अथ वृष्टिज्ञानार्थं मेघगर्भज्ञानम् ।

मार्गे शुक्लादितो ज्ञेयो मेघगर्भसमुद्भवः ॥ तुहिनात्परिधेर्वृष्ट्या संध्यारागात्तथापि वा ॥ २६२ ॥ पौषेऽतिशीततो माघे संध्याभ्रादनिलादपि ॥ फाल्गुने ताम्रवर्णाऽर्कात्स्निग्धाभ्राद्वा खरानिलात् ॥ चैत्रे तु परिधेर्वृष्ट्या वायुना वाभ्ररेखया ॥ २६३ ॥

अब वृष्टिज्ञानार्थ मेघगर्भज्ञान लिखतेहैं—मार्गशीर्षमासके शुक्लपक्षसे लेकर मेघगर्भकी उत्पत्ति तुषारसे, पारस वैठनेसे, वर्षासे, संध्याके रंगसे जाननी चाहिये ॥ २६२ ॥ और पौषमें अतिशीत पड़नेसे, माघमें संध्यासमयके वादलोंसे, पवनसे; फाल्गुनमें ताम्रवर्णके सूर्यसे, चिकने वादलोंसे, तीक्ष्ण पवनसे; चैत्रमें सूर्यचंद्रमापर पारस वैठनेसे, वर्षासे, पवनसे, वादलोंकी रेखासे मेघगर्भकी उत्पत्ति जानै ॥ २६३ ॥

## अथ केषांचिन्मतांतरम् ।

केचिन्मार्गादिमासेषु प्रोचुर्गर्भस्य लक्षणम् ॥
गर्जनात्पवनात्तोयवर्षणाद्विद्युतोऽथवा ॥ २६४ ॥

अब किसीका मतान्तर लिखतेहैं—किन्ही आचार्योंने ऐसा कहाहै कि, मार्गादि मासोंमें गर्जनेसे वा पवनसे वा जल वर्षनेसे वा विजली चमकनेसे मेघगर्भका लक्षण होताहै ॥ २६४ ॥

## अथ शुभगर्भलक्षणानि ।

श्वेतनीलांडजाऽभ्रा ये न चातिविगलज्जलाः ॥ शस्तगर्भाश्च ते मेघा उदगीशानपूर्वजाः ॥ २६५ ॥ पुष्टिं प्रयांति ते गर्भा विद्युद्वाताभ्रगर्जितैः ॥ भाद्रापाढाद्वयोत्पन्ना विशाखोत्था वहूदकाः ॥ २६६ ॥

अब शुभगर्भलक्षण लिखतेहैं—सफेद तथा नीले रंगके पक्षीके समान वादल होय जिनमेंसे अतिजल न वर्षता होय अथवा उत्तर, ईशान, पूर्वदिशामें वादल होंय तो शुभगर्भ होतेहैं ॥ २६५ ॥ और वे गर्भ पुष्टिको प्राप्त होतेहैं. जिनमें विजली, पवन, वादलोंकी गर्जन होतीहोय और भाद्रपद तथा आपाढ इन दो महीनों अथवा विशाखा नक्षत्रमें उत्पन्नहुए गर्भ वहुत जल वर्षातेहैं ॥ २६६ ॥

## अथ गर्भधारणदिनाद्वृष्टिज्ञानम् ।

वृष्टिर्गर्भाहमारभ्य पक्षैर्विश्वमिते १३ भवेत् ॥
रात्रिगर्भे दिवा वृष्टिर्दिवागर्भे निशि स्मृता ॥ २६७ ॥

अब गर्भधारणदिनसे वृष्टिज्ञान लिखतेहैं-गर्भदिनसे लेकर तेरहवे पक्षमे वर्षा होतीहै, जो गर्भ रात्रिमें रहाहोय तो दिनमे वर्षा होतीहै और यदि दिनमें रहाहोय तो रात्रिमे वर्षा होतीहै॥२६७॥

## अथ प्रकारांतरेण गर्भाहाद्वृष्टिज्ञानम् ।

आरभ्यैकादशीं कृष्णां शुक्लादौ माघमासके ॥ द्वादशस्वपि घस्रेषु विद्युद्वाताऽभ्रगर्जितैः ॥ रोहिण्यादिषु सूर्यस्य भेषु वृष्टिर्भवेत्क्रमात् ॥ २६८ ॥

अब प्रकारान्तरसे गर्भदिनसे वृष्टिज्ञान लिखतेहैं-माघमासमे कृष्णपक्षकी एकादशीसे लेकर शुक्लपक्षकी सप्तमीतक बारहदिनके भीतर जिसरोज बिजली चमकै, पवन चलै, बादल गर्जै तो सूर्यके रोहिण्यादिक बारह नक्षत्रोंमे क्रमसे वर्षा होतीहै ॥ २६८ ॥

## अथ पुनरन्यप्रकारेण मेघगर्भज्ञानं वृष्टिज्ञानं च ।

मूलर्क्षे भास्करे याते तदाऽऽरभ्य दशाहकम् ॥ विद्युदभ्रादिना गर्भो यत्रयत्र दिने भवेत् ॥ क्रमादार्द्रादिनक्षत्रे भानौ वृष्टिः प्रजायते ॥ २६९ ॥

अब फिर अन्यप्रकारसे मेघगर्भज्ञान और वृष्टिज्ञान लिखतेहैं- सूर्य जब मूल नक्षत्रपर जावै तबसे लेकर दश १० दिनके भीतर जिसकिसीदिन बिजली चमकै, मेघ गर्जै, पवन चलै तो क्रमसे सूर्यके आर्द्रादि दश नक्षत्रोंमे वर्षा होतीहै ॥ २६९ ॥

## अथ प्रकारांतरम् ।

मूलभाद्भरणी यावद्भेषु चैकादशस्वपि ॥ पौषे मासि दिनर्क्षेषु गर्भस्त्वभ्रादिना भवेत् ॥ २७० ॥ तन आर्द्रादिगे सूर्ये क्रमाद्वृष्टिः प्रजायते ॥ २७१ ॥

अब प्रकारान्तर लिखतेहैं–पौषमासमें मूलनक्षत्रसे लेकर भरणीतक ग्यारह नक्षत्रोंमें बादल, बिजली, पवन आदिसे गर्भ रहे तो ॥ २७० ॥ क्रमसे सूर्यके आर्द्रादि एकादश नक्षत्रोंमें वर्षा होतीहै ॥ २७१ ॥

## पुनः प्रकारांतरम्।

अश्विन्यादिषु धिष्ण्येषु चैत्रे दशसु चेद्भवेत् ॥ अभ्रादिकं तदा गर्भ आर्द्रादौ वृष्टिदः क्रमात् ॥ मेषार्कदिनमारभ्य ज्ञेयमेवमथापि वा ॥ २७२ ॥

फिर प्रकारान्तर लिखतेहैं–चैत्रके महीनेमें अश्विन्यादि दश नक्षत्रोंमें मेघादिकरके गर्भ रहे तो वर्षाके आर्द्रादि दश नक्षत्रोंमें क्रमसे वर्षा होतीहै. इसी प्रकार मेषके सूर्यकी संक्रातिके दिनसे लेकर दशदिनके भीतर जिसदिन गर्भ रहे आर्द्रादि दश नक्षत्रोंमें क्रमसे उसी नक्षत्रमें वर्षा होतीहै ॥ २७२ ॥

## अथ सामान्यतोवृष्टिज्ञानम्।

यदि साभ्रं नभोऽमायां सुभिक्षं च भवेद्ध्रुवम् ॥ यद्यभ्रं दृश्यते व्योम्नि चैकादश्यां तु कार्त्तिके ॥ २७३ ॥ आषाढे मासि वृष्टिः स्यात्तदा भवति भूयसी ॥ मार्गाष्टम्यां यदा विद्युद्वर्षणं श्रावणे तदा ॥ २७४ ॥ पौषे कृष्णे दशम्यां चेद्वृष्टिर्भाद्रपदे तथा ॥ सप्तम्यां माघशुक्ले स्याद्भवेदभ्रादिकं यदा ॥ २७५ ॥ ज्येष्ठे मूले न चेद्वृष्टिः सुवृष्टिर्बहुला तदा ॥ २७६ ॥

अब सामान्यवृष्टिज्ञान लिखतेहैं–यदि अमावास्याके दिन आकाशमें बादल होंय तो निश्चयही सुभिक्ष होताहै और कार्त्तिकमासकी एकादशीके दिन आकाशमें बादल दीखें तो ॥ २७३ ॥ आषाढ मासमें बहुत वर्षा होताहै. यदि मार्गशीर्षकी अष्टमीके दिन

विजली चमके तो श्रावणमें वर्षा होतीहै ॥२७४॥ यदि पौषकृष्ण-पक्ष दशमीके दिन बादल वा वर्षा होय तो भाद्रपदमें वर्षा होती हे और यदि माघशुक्लपक्षकी सप्तमीके दिन बादल विजली आदि होय ॥ २७५ ॥ और ज्येष्ठके महीनमे मूलनक्षत्रके दिन वर्षा न होय तो वहुत वर्षा होतीहै ॥ २७६ ॥

## अथ ज्येष्ठशुक्लाष्टम्यादिदिनचतुष्टये वायुफलम् ।

ज्येष्ठेऽष्टम्यास्तु शुक्लायाश्चतुर्षु दिवसेषु च ॥
श्रावणादौ क्रमाद्वृष्टिर्मंदैः शस्तैः समीरणैः ॥ २७७ ॥

अथ ज्येष्ठशुक्लाष्टम्यादि दिनचतुष्टयमें वायुफल लिखतेहैं—ज्येष्ठ मासकी शुक्लाष्टमीसे लेकर चारदिनके भीतर किसीदिन मन्द पवन चले तो क्रमसे श्रावणादिक चार महीनोंमें वर्षा होतीहै ॥ २७७ ॥

## अथ स्वात्यादिषु वृष्टौ श्रावणादावनावृष्टिः ।

ज्येष्ठे चतुर्षु धिष्ण्येषु स्वातीमारभ्य वर्षणे ॥
क्रमाच्छ्रावणतो वृष्टिर्नो भवेत्तत्रतत्र च ॥ २७८ ॥

अथ स्वात्यादिमें वृष्टि होनेसे श्रावणादिमें अनावृष्टि लिखतेहैं—ज्येष्ठ मासमें स्वात्यादि चार नक्षत्रोंमें किसी दिन वर्षे तो क्रमसे श्रावणादि चारमहीनोंके भीतर उसीसंख्याके महीनेमें वर्षा नहीं होतीहै ॥ २७८ ॥

## अथाषाढद्वितीयादिषु चतुर्षु फलम् ।

आषाढे मासि शुक्लायां द्वितीयायां प्रवर्षणे ॥ तृतीयायां पुरो वायुर्मेघो वा पूर्वदिग्गतः ॥ २७९ ॥ चतुर्थ्यां जलदः प्राच्यां दक्षिणो यदि मारुतः ॥ पंचम्यां पूर्वदिङ्मेघस्तदा श्रावणमासतः ॥ २८० ॥ ध्रुवं वृष्टिः शुभा ज्ञेया क्रमान्मासचतुष्टये ॥ चतुर्ष्वेषु दिनेष्वेव यदि वृष्टिर्निरंतरम् ॥२८१॥

तदा स्यादतिवृष्टिश्च धान्यनाशः प्रजायते ॥ याम्यप्रत्यग्भवे वायौ द्व्यहं दुर्भिक्षमीरितम् ॥ २८२ ॥ तृतीयापंचमीघस्रे यद्युदक्पूर्वजो मरुत् ॥ तदा स्याद्धान्यनिष्पत्तिर्बहुला वृष्टिरुत्तमा ॥ २८३ ॥

अव आपाढशुक्लद्वितीयादि चारतिथिमे फल लिखतेहैं—यदि आपाढमासमें शुक्लपक्षकी द्वितीयाके दिन वर्षा होय, तृतीयाके दिन पूर्वका पवन चले अथवा पूर्वदिशामें बादल होय ॥२७९॥ चतुर्थीके दिन पूर्वदिशामें बादल होय, दक्षिणका पवन चले और पचमीके दिन पूर्वदिशामें बादल होय तो श्रावणादिक चार महीनोंमें ॥२८०॥ क्रमसे निश्चयही बहुत अच्छी वर्षा होतीहै और यदि इन द्विती· यादिक चार दिनोंमें लगातार वर्षा होय तो ॥ २८१ ॥ श्रावणादि चारों महीनोंमे अतिवृष्टि और धान्यका नाश होताहै अथवा पूर्वोक्त दो दिन दक्षिण वा पश्चिमका पवन चले तो दुर्भिक्ष होताहै॥२८२॥ यदि तृतीया वा पंचमीके दिन उत्तर वा पूर्व दिशाका पवन चले तो बहुत अन्नकी उपज और अच्छी वर्षा होतीहै ॥ २८३ ॥

## अथ श्रावणशुक्लपंचमीफलम् ।

पंचम्याः श्रावणे शुक्ले द्व्यहे वृष्टिर्भवेद्यदि ॥
याम्यप्रत्यग्भवो वायुर्दुर्भिक्षं जायते तदा ॥ २८४ ॥

अव श्रावणशुक्लपंचमीका फल लिखतेहैं—यदि श्रावणशुक्लापंचमीसे लेकर दोदिनके भीतर वर्षा होय और दक्षिण वा पश्चिम दिशाका पवन चले तो दुर्भिक्ष होताहै ॥ २८४ ॥

## अथ सूर्यस्य रेवत्यादिषु नक्षत्रेषु वृष्टेः फलम् ।

रेवत्यां वर्षणे तापं नश्येद्धान्यमथाश्विभे ॥ भरण्यां तद्वयं वृष्टि· कृत्तिकायां न चेद्रविः ॥ २८५ ॥ रोहिण्यां गर्जिते

वृष्टिर्ज्ञेया मासद्वयोत्तरम् ॥ मृगशीर्षे यदा न स्याद्भवेद्वृष्टि- र्बहूदका ॥ २८६ ॥

अब सूर्यके रेवत्यादि नक्षत्रमें रहते वृष्टिका फल लिखतेहैं-यदि सूर्यके रेवती नक्षत्रमें वर्षा होय तो ताप और अश्विनी नक्षत्रम वर्षा होय तो अन्नका नाश और भरणी नक्षत्रमें वर्षा होय नो ( द्वयम् ) ताप तथा अन्नका नाश होताहै और जो कृत्तिका नक्षत्रमें वर्षा न होय तो वर्षाकालमें वर्षा होतीहै ॥ २८५ ॥ और रोहिणी नक्षत्रमें वादल गर्जै तो दो महीने पीछे वर्षा होतीहै और यदि मृगशीर्षमें वर्षा नहीं होय तो वर्षाकालमें वहुत जलकी वर्षा होतीहै ॥ २८६ ॥

## अथ संक्रातिदिने वृष्टिफलम्।

संक्रांतिदिवसे वृष्टौ मार्गकार्त्तिकयोर्यदा ॥ वर्षं तन्मध्यमं ज्ञेयं पौपे माघे तु चोत्तमम् ॥ २८७ ॥ सुभिक्षं च शुभा वृष्टिः फाल्गुनादिचतुष्टये ॥ रोगश्चापाढमासे स्याच्छ्रावणे वृष्टिरुत्तमा ॥ २८८ ॥ भाद्रे रोगस्तथा सौख्यमाश्विने वर्षणं भवेत् ॥ २८९ ॥

अब संक्रातिदिनमें वृष्टिफल लिखतेहैं-मार्गशीर्ष और कार्त्तिक मासकी संक्रातिके दिन वर्षा होय तो मध्यम वर्षा होतीहै। पौप और माघमासमें संक्रान्तिके दिन वर्षा होय तो उत्तम वर्षा होती है ॥२८७॥ और फागुन, चैत्र, वैशाख, ज्येष्ठ मासमें संक्रांतिके दिन वर्षा होय तो सुभिक्ष तथा शुभवृष्टि होतीहै। आपाढमासमें संक्रा- तिके दिन वर्षा होय तो रोग होताहै और श्रावणमें संक्रांतिके दिन वर्षे तो उत्तम वर्षा होतीहै ॥ २८८ ॥ भाद्रपदमें संक्रांतिके दिन वर्षे तो रोग और आश्विन मासमें संक्रातिके दिन वर्षा होय तो सौख्य होताहै ॥ २८९ ॥

## अथ काकनीडफलम्।

सद्वृक्षे काकनीडं स्यात्प्रतीच्यां वृष्टिरुत्तमा ॥ उदग्याम्ये भयं मध्ये नैर्ऋतावंतिमा स्मृता ॥ २९० ॥ अल्पवृष्टिरथाग्नेय्यां सदन्नं स्याच्छिवेनिले ॥ मध्येमध्याय वृक्षाग्रे बहुला वृष्टिरीरिता ॥ २९१ ॥ ईतिभीतिर्महाघोरा नीडे सर्वदिशां गते ॥ नीडे सकंटके भीती रसानां जायते ध्रुवम् ॥ २९२ ॥ प्रागुदक्पश्चिमार्द्धस्य सुवृष्टिः कैश्चिदीरिता ॥

अब काकनीडफल लिखतेहैं—यदि शुभ वृक्षपर कौएका घोंसला पश्चिम दिशामें होय तो वर्षा उत्तम होतीहै और उत्तर वा दक्षिण दिशामें होय तो भय होताहै और वृक्षके मध्यमें वा नैर्ऋत्यमें घोंसला होय तो वर्षाकालके अन्तपर वर्षा होतीहै ॥ २९० ॥ और आग्नेय दिशामें काकनीड होय तो अल्प वर्षा होतीहै और ईशान वा वायव्यमें होय तो अन्न अच्छा होताहै और वृक्षके मध्यमें होय तो मध्यम वर्षा होतीहै और वृक्षके अग्र भागमें होय तो बहुत वर्षा होतीहै ॥ २९१ ॥ और सब दिशाओंमें कौओंके घोंसले होंय तो महाघोर ईतिका भय होताहै और कांटोंसहित घोंसला होय तो रसोंके लिये भय होताहै ॥ २९२ ॥ किन्हीं आचार्योंने ऐसा कहाहै कि, पूर्व, उत्तर, पश्चिम दिशाओंके अर्द्धभागमें काकनीड होय तो अच्छी वर्षा होतीहै ॥

## अथ टिट्टिभांडफलम्।

स्थितेपूच्चप्रदेशेषु टिट्टिभांडेषु चोत्तमा ॥ वृष्टिः संजायते मासैरधोवक्रांडसंख्यकैः ॥२९३॥ निम्नप्रदेशसंस्थेषु स्वल्पा वृष्टिः प्रजायते ॥ वृष्टिर्नैव भवेन्मासे चोर्ध्ववक्रांडसंख्यके ॥ २९४ ॥

अव टिट्टिभांडफल लिखतेहैं–टिटहटी ऊँचे स्थानपर अण्डे धरैं तो उत्तम वर्षा होतीहै और जितने अंडोंके मुख नीचेको हों‌य उतने महीनोंमें वर्षा होतीहै ॥ २९३ ॥ और नीचे स्थानमें टिटहरी अण्डे धरैं तो थोडी वर्षा होतीहै और उन अण्डोंमें जितने अंडोंके मुख ऊर्द्धको हों‌य उतने महीनोंमें वर्षा नहीं होतीहै ॥ २९४ ॥

## अथ रोहिणीचक्रम् ।

द्वादशांशं लिखेच्चक्रं मेषसंक्रांतिभादितः ॥ चतुर्दिक्षु समुद्राश्च चतुष्कोणेषु पर्वताः ॥२९५॥ समुद्रपार्श्वयोरष्टौ तटस्तच्छैलयोस्तथा ॥ मध्येष्टौ संधयस्तत्र साभिजिद्भगणं न्यसेत् ॥ २९६ ॥ द्वयंद्वयं समुद्रेषु तथैकैकं तटादिषु ॥ रोहिणी संस्थिता यत्र ज्ञेयं वृष्टिफलं ततः ॥२९७॥ तटेषु शोभना-वृष्टिर्महावृष्टिस्तु सागरे ॥ अनावृष्टिर्गिरौ देशे खंडवृष्टिस्तु संधिषु ॥ २९८ ॥

अव रोहिंणी चक्र लिखतेहैं–वारह कोठोंका रोहिणीचक्र लिखै और उसचक्रमें मेषकी संक्राति लगनेके दिन जौनसा नक्षत्र होय उससे लेकर अट्टाईस नक्षत्र भरदेवे चारों दिशाओंमें समुद्र वनावै, चारों कोणोंमें पर्वत लिखे और समुद्रके दोनों करवटोंमें आठ तट वनावे तथा तट और पर्वतोंके वीचमें आठ संधि वनावै॥२९५॥२९६॥ इस चक्रमें अभिजित्सहित अट्टाईस नक्षत्र इस प्रकारसे रक्खे कि, दोदो नक्षत्र समुद्रोंमें और एकएक नक्षत्र तटादिकोंमें लिखे जहाँ रोहिणी नक्षत्र पडे उसी स्थानसे वर्षाका फल जाने॥२९७॥ तटमें रोहिणी पडे तो शोभन वृष्टि और समुद्रमें पडे तो महावृष्टि और पर्वतमें पडे तो अनावृष्टि, संधियोंमें पडे तो खंडवृष्टि होतीहै॥२९८॥

| | | | | |
|---|---|---|---|---|
| सधि उत्तराभाद्रपद पर्वत पूर्वाभाद्रपद शतभिषा सधि | तट रेवता | समुद्र अ भ | तट कृ | सधि रोहिणी पर्वत मृगशिर आर्द्रा सधि |
| तट धनिष्ठा | | | | पुनर्वसु तट |
| समुद्र अभिजित् श्रवण | | अथ रोहिणीचक्रम्। | | समुद्र पुष्य आश्लेषा |
| तट उत्तराषाढ | | | | माघा तट |
| सधि पूर्वाषाढ मूल पर्वत ज्येष्ठा सधि | अनुराधा तट | समुद्र स्वाति विशाखा | चित्रा तट | सधि पूर्वाफा उत्तराफा पर्वत हस्त सधि |

# अथ सप्तनाडीचक्रम्।

कृत्तिकादिलिखेच्चक्रं साभिजित्सप्तनाडिकम् ॥ चंडा १ वायु २ स्तथा वह्निः ३ सौम्या ४ नीरा ५ जला ६ ऽमृता ७ ॥२९९॥ नाडीनां सप्त नामानि ज्ञेयान्येतानि पंडितैः॥ क्रमान्मंदार्कभौमेज्यशुक्रज्ञाब्जास्तदीश्वराः ॥ ३०० ॥

अब सप्तनाडीचक्र लिखतेहैं—कृत्तिकासे लेकर अभिजित्समेत अट्टाईस नक्षत्रोंका सप्तनाडी चक्र लिखै. चंडा १, वायु २, अग्नि ३, सौम्या ४, नीरा ५, जला ६, अमृता ७ ॥२९९॥ नाडियोंके ये सात नाम हैं; यह पंडितोंको जानलेने चाहिये. इन सातों नाडियोंके क्रमसे शनैश्चर १, सूर्य २, मङ्गल ३, बृहस्पति ४, शुक्र ५, बुध ६, चन्द्रमा ७ स्वामीहैं ॥ ३०० ॥

## अथ तदेव स्पष्टयति ।

चंडाख्या भरणीद्वंद्वं विशाखाद्वितयं शनेः ॥ ज्येष्ठाऽश्विरोहिणीस्वात्यो वायुनाडी रवेः स्मृता ॥ ३०१ ॥ चित्रा मूलो मृगोंत्यं च दहनाख्या कुजस्य च ॥ पूर्वाषाढा करो भाद्रा सौम्या नाडी बृहस्पतेः ॥ ३०२ ॥ पूभोपा च पुनर्धिष्ण्यमुफा नीरा भृगोः स्मृता ॥ पूभाशताभिजित्पुष्यं जलनाडी बुधस्य सा ॥ ३०३ ॥ श्रवोद्वयं मघाऽऽश्लेषा चेंदोरमृतनाडिका ॥

अब उसीको स्पष्टकरके लिखतेहैं-भरणी, कृत्तिका, विशाखा, अनुराधा ये नक्षत्र चण्डनाडीके हैं; इनका स्वामी शनैश्चरहै. ज्येष्ठा, अश्विनी, रोहिणी, स्वाती ये नक्षत्र सूर्यकी वायुनाडीके हे ॥ ३०१ ॥ चित्रा, मूल, मृगशिर, रेवती ये नक्षत्र मङ्गलकी अग्निनाडीके है. पूर्वाषाढा, हस्त, उत्तराभाद्रपद, आर्द्रा ये नक्षत्र बृहस्पतिकी सौम्यनाडीके हैं ॥ ३०२ ॥ पूर्वाभाद्रपद, उत्तराषाढा, पुनर्वसू, उत्तराफाल्गुनी ये नक्षत्र शुक्रकी नीर नाडीके हैं. पूर्वाफाल्गुनी, शतभिषा, अभिजित्, पुष्य ये नक्षत्र बुधकी जलनाडीके हैं ॥३०३॥ श्रवण, धनिष्ठा, मघा, आश्लेषा ये नक्षत्र चन्द्रमाकी अमृत नाडीके हैं ॥

## अथैतासु ग्रहेषु संस्थितेषु फलम् ।

व्याद्या यद्येकनाडीस्थाः सौम्याः पापाश्च खेचराः ॥ तेभ्यो नाडीफलं वाच्यं सदसद्वा विचक्षणैः ॥ ३०४ ॥ चंडनाड्यां महावातान्वातनाड्यां तथाऽनिलम् ॥ वह्निनाड्यां स्थिता दाहं सौम्यनाड्यामथोदकम् ॥ ३०५ ॥ नीरनाड्यां पयोवृष्टिर्जलनाड्यां च वर्षणम् ॥ कुर्वंत्यमृतनाड्यां च महावृष्टिं नभश्चराः ॥ ३०६ ॥ एकोपि निजनाडीस्थो धत्ते

तत्तत्फलं ग्रहः ॥ कुजस्तु सर्वनाडीषु स्थितो नाडीसमुद्भवम् ॥ ३०७ ॥ आर्द्राद्यर्क्षगते सूर्ये नाड्यैक्ये फलमुच्यते ॥ यद्दिने चैकनाडीस्थाः पापाः सौम्याश्च खेचराः ॥ ३०८ ॥ मिश्राश्चंद्रमसा युक्तास्तद्दिने वृष्टिरुत्तमा ॥ तोयराश्यंशगा मिश्रा तावद्वृष्टिं प्रकुर्वते ॥ ३०९ ॥ यावत्तोयांशगश्चंद्रः केवलाः स्वल्पवृष्टिदाः ॥ एभिश्च खेचरैः सौम्यैः पापैर्विद्धो यदा शशी ॥ ३१० ॥ पानीयं च तदा तुच्छं धान्यादीनां च नाशनम् ॥ यस्य खेटस्य नाडीस्थो विधुस्तेन ग्रहेण च ॥ ३११ ॥ युक्तश्चेद्वृष्टिदो ज्ञेयो यदि क्षीणतरो न हि ॥ चंद्रः पीयूषनाडीस्थो मिश्रैः खेटैश्च संयुतः ॥ ३१२ ॥ त्रिचतुःसप्तपंचाहं शुभवृष्टिप्रदो भवेत् ॥ जलनाडीस्थिते चंद्रे मित्रखेचरसंयुते ॥ ३१३ ॥ दिनार्द्धं प्रत्यहं वृष्टिः पंचाहं जायते शुभा ॥ नीरनाड्यां गते चंद्रे मिश्रैः खेटैश्च संयुतः ॥ ३१४ ॥ पादोनत्रिदिनं वृष्टिर्बहुतोया भवेच्छुभा ॥ नीराख्यजलपीयूषनाडीस्थाः खेचराः क्रमात् ॥ ३१५ ॥ धृत्य १८ र्क १२ रस ६ संख्याकान्वासरान्बहुवृष्टिदाः ॥ सौम्यनाडीस्थिताः सर्वे त्र्यहं वृष्टिप्रदाः खगाः ॥ चंद्रवाय्वग्निनाडीस्था महावातातपप्रदाः ॥ ३१६ ॥ योगे शुभाधिके नाडी निर्जलाऽपि जलप्रदा ॥ योगे क्रूराधिके ज्ञेया सजला निर्जला बुधैः ॥ ३१७ ॥ सौम्यनाड्यां स्थिताः पापा अनावृष्टिकरा मताः ॥ शुभास्तोयांशकश्चेत्स्युः स्वल्पवृष्टिप्रदास्तदा ॥ ३१८ ॥ एकनाडिस्थिता भौमजीवचंद्रमसो यदि ॥ वारिपूर्णा भवेत्पृथ्वी बहुवृष्ट्या तदाऽखिला ॥ ३१९ ॥ भृगुसौम्यौ यदैकत्र स्यातां जीवान्वितौ तदा ॥ वृष्टिःस्याद्बहुलाकस्माच्चंद्रयोगे विशेषतः ॥ ३२० ॥

भृगुचंद्रमसौ पापैः खेचरैर्यदि संयुतौ ॥ तदा स्वल्पोदका वृष्टिर्जलयोगे महत्यपि ॥ ३२१ ॥

अब इसमें स्थित ग्रहका फल लिखतेहैं-जब दो आदि अर्थात् दोसे लेकर अधिक शुभग्रह वा पापग्रह एकनाडीमें स्थित होंय तब पण्डितोंको चाहिये कि, नाडीका शुभाशुभ फल विचारें. यदि पापग्रह अधिक होंय तो अशुभ और सौम्यग्रह अधिक होंय तो शुभ फल पण्डितोंने कहा है ॥ ३०४ ॥ चंडनाडीमें सब ग्रह होंय तो महापवन चलै और वायुनाडीमें सब ग्रह स्थित होंय तोभी पवन चलता है और अग्निनाडीमें सब ग्रह होंय तो दाह होताहै और सौम्यनाडीमें सब ग्रह होंय तो जल वर्षताहै ॥ ३०५ ॥ और नीर नाडीमें होंय तोभी जलकी वर्षा होतीहै और जलनाडीमें होंय तोभी जल वर्षताहै और अमृतनाडीमें सब ग्रह होंय तो महावर्षा होतीहै ॥ ३०६ ॥ और अपनी नाडीमें बैठाहुआ अकेला ग्रहभी उसी नाडीका फल देताहै और मंगल तो सब नाडियोंमें बैठकर उसी २ नाडीका फल देताहै ॥ ३०७॥ और जब आर्द्रादि नक्षत्रोंपर सूर्य होंय तब एक उसी नाडीका फल होताहै और जिस दिन पापग्रह अथवा शुभग्रह वा दोनों मिले जुले ग्रह चंद्रमासे युक्त होंय तो उत्तम वर्षा होतीहै और मिश्रग्रह जबतक जलराशियोंके नवांशोंमें रहें तबतक वर्षा करते हैं ॥ ३०८ ॥ ३०९ ॥ और जबतक जलराशिके नवांशमें अकेला चंद्रमाही रहे तो थोडी वर्षा होतीहै और जो इन पाप तथा शुभग्रहोंसे चन्द्रमा विद्ध होय तो ॥ ३१० ॥ बहुत थोडा जल वर्षता है और अन्नका नाश होताहै और जिस ग्रहकी नाडीमें चन्द्रमा स्थित होय और उसी ग्रहसे युक्त होय तो ॥ ३११ ॥ वृष्टिदायक होताहै और क्षीणचन्द्रमा होय तो वर्षा नहीं होतीहै. चन्द्रमा अमृत नाडीमें स्थित होकर मिश्रग्रहोंसे संयुक्त होय तो ॥ ३१२ ॥ तीन,

चार, पांच, सात दिनतक बहुत अच्छी वर्षा करता है और मित्र-ग्रहोंसे संयुक्त चन्द्रमा जलनाडीमें स्थित होय ॥ ३१३ ॥ तो पांच दिनतक हररोज दोदो प्रहर अच्छी वर्षा होती है और मिश्र ग्रहोंसे संयुक्त चन्द्रमा नीरनाडीमें स्थित होय तो ॥ ३१४ ॥ तीन दिनतक प्रतिदिन दिनके तीन भागोंमें खूब वर्षा होतीहै. यदि सब ग्रह नीर, वा जल, वा अमृत नाडीमें स्थित होंय तो क्रमसे ॥ ३१५ ॥ अठारह, बारह, छह दिनतक बहुत वर्षा करतेहैं और यदि सब ग्रह सौम्यनाडीमें स्थित होंय तो तीन दिन वर्षा करतेहैं और चंड अथवा वायु वा अग्नि नाडीमें सबग्रह होंय तो महापवन चलताहै और घाम तेज पडतीहै ॥ ३१६ ॥ जिस नाडीमें शुभग्रह अधिक होंय वह निर्जलनाडीभी जलदायिनी होतीहै और जिस नाडीमें क्रूरग्रह अधिक होंय वह सजलनाडीभी निर्जल होजातीहै ऐसा पंडितोंने कहाहै ॥ ३१७ ॥ यदि सौम्यनाडीमें पाप-ग्रह स्थित होंय तो अनावृष्टि होतीहै और शुभग्रह जलराशिके नवांशकमें होंय तो स्वल्पवृष्टि होतीहै ॥ ३१८ ॥ यदि एकनाडीमें मंगल, बृहस्पति, चंद्रमा स्थित होंय तो बहुत वर्षा होनेसे समस्त पृथ्वी जलसे पूर्ण होजातीहै ॥ ३१९ ॥ यदि शुक्र, बुध, बृहस्पति एक नाडीमें स्थित होंय तो अचानक बहुत वर्षा होतीहै और जो चंद्रमा इन्हीं ग्रहोंके साथ होय तो विशेष वर्षा होतीहै ॥ ३२० ॥ यदि शुक्र, चंद्रमा पापग्रहोंसे संयुक्त होंय तो थोडी वर्षा होतीहै और यही ग्रह (जलयोग) जलराशिमें होंय तो महती वर्षा होतीहै ॥ ३२१ ॥

## अथ शुक्रस्थितिवशाद्ग्रहयोगवशाच्च वृष्टिज्ञानम्।

मघादिपंचधिष्ण्यस्थः शुक्रः प्रागुदितोनिशम् ॥ ३२२ ॥
वृष्टिकृत्पश्चिमाशास्थः स्वात्यादित्रितये स्थितः ॥ वैपरी-

त्यमितो यातो भृगुः कुर्यादवर्षणम् ॥ ३२३ ॥ कुर्वाते बहुलां वृष्टिं बुधशुक्रौ च संयुतौ ॥ समुद्रशोषणे शक्तस्तयोरंतर्गतो रविः ॥ ३२४ ॥ शुक्रात्सप्तमगश्चंद्रो वृष्टिदः स्याच्छुभेक्षितः ॥ मंदाद्वा द्यून ७ कोणस्थ ५ । ९ श्चंद्रमा वृष्टिकृत्तदा ॥ ३२५ ॥ ग्रहाणामुदये चास्ते राश्यंतरगमेऽयने ॥ संयोगे वाऽथ पक्षांते प्रायो वृष्टिः प्रजायते ॥ ३२६ ॥ उदये वाक्पतेर्वृष्टी राशिभांतरगे कुजे ॥ शुक्रे चास्तमिते मंदे त्रिविधेऽपि प्रजायते ॥ ३२७ ॥ भौमार्कौ एकराशौ चेदन्योन्यं समसप्तगौ ॥ गुरुशुक्रौ कुजार्कौ वा विदुरावर्षणं तदा ॥ ३२८ ॥

अब शुक्रस्थितिवशसे और ग्रहयोगवशसे वृष्टिज्ञान लिखतेहैं— यदि मघादिक पांच नक्षत्रोंमे स्थित शुक्रका उदय पूर्वदिशामें होय तो लगातार वर्षा होतीहै ॥ ३२२ ॥ और यदि स्वात्यादिक तीन नक्षत्रोंपर स्थित शुक्रका उदय पश्चिम दिशामे होय तो वर्षा होतीहै और इन नक्षत्रोंसे अन्य नक्षत्रोपर शुक्रका उदय होय तो वर्षा नहीं होतीहै ॥ ३२३ ॥ और बुध तथा शुक्रका योग होय तो बहुत वर्षा करतेहैं और इन दोनोके बीचमें सूर्य होय तो समुद्रकेभी सुखा देनेमें समर्थ होतेहैं ॥ ३२४ ॥ यदि शुक्रसे सातवें स्थानमें चंद्रमा शुभग्रहोंसे दृष्ट होय तो वृष्टिदायक होताहै अथवा शनैश्चरसे सातवें, नौवें, पांचवें स्थानमे चद्रमा स्थित होय तो वृष्टिकारक होताहै ॥ ३२५ ॥ ग्रहोंका उदय वा अस्त होय अथवा एकराशिसे दूसरी राशिपर गमन होय अथवा अयनपर गमन होय अथवा परस्पर ग्रहोंका संयोग होय अथवा पक्षकी समाप्ति होय तो प्राय. वर्षा होतीहै ॥ ३२६ ॥ बृहस्पतिका उदय होय वा मंगलका राशि और नक्षत्रपर गमन होय अथवा शुक्रका अस्त होय इसी प्रका-

रसे शनैश्चर होय अर्थात् शनैश्चरका उदय वा अस्त अथवा राशि वा नक्षत्रपर गमन होय तो वर्षा होतीहै ॥३२७॥ यदि मंगल, शनैश्चर एकराशिमें होंय अथवा परस्पर एक दूसरेसे सातवें स्थानमें होंय अथवा इसी प्रकार बृहस्पति, शुक्र और मंगल, सूर्य होंय तो वर्षा नहीं होतीहै ॥ ३२८ ॥

## अथार्द्रादिरविनक्षत्रप्रवेशे स्त्रीपुंयोगादौ वृष्टिज्ञानम्।

स्त्रीसंज्ञानि दशार्द्रातो भानि प्रोक्तानि कोविदैः ॥ विशाखादित्रयं क्लीवं पुंसंज्ञानीतराणि च ॥ ३२९ ॥ रवेर्धिष्ण्यप्रवेशस्य काले चंद्रार्कयोरुभे ॥ धिष्ण्ये च यादृशे स्यातां विज्ञेयं तद्वशात्फलम् ॥ ३३० ॥ स्त्रीपुंसयोर्महावृष्टिरल्पा स्त्रीक्लीवयोः क्वचित् ॥ अभ्रच्छाया स्त्रियोः पुंसोः क्लीवयोर्वा न किंचन ॥ ३३१ ॥ तोयचारिविलग्ने च वृष्टियोगे यदा रवेः ॥ नक्षत्रस्य प्रवेशः स्यात्तदा वृष्टिस्तु शोभना ॥ ॥ ३३२ ॥ निशायामर्द्धरात्रे वा रवेर्ऋक्षप्रवेशने ॥ बहुतोया सुवृष्टिः स्यादन्यथा नैव जायते ॥ ३३३ ॥

अब आर्द्रादि रविनक्षत्रप्रवेशमें स्त्रीपुंयोगादिमें वृष्टिज्ञान लिखतेहैं-आर्द्रासे लेकर दश नक्षत्र पंडितोंने स्त्रीसंज्ञक कहेहैं और विशाखासे तीन नक्षत्र नपुंसक संज्ञक और शेष नक्षत्र पुरुष संज्ञक कहेहैं ॥ ३२९ ॥ जिस समय सूर्यके नक्षत्रका प्रवेश होय उसी समय चंद्रमाके नक्षत्रकी और सूर्यके नक्षत्रकी संज्ञा जानकर वर्षाका फल विचारै ॥ ३३० ॥ एक नक्षत्र स्त्री और एक पुरुष होय तो महावृष्टि और स्त्री नपुंसकका योग होय तो कहींकहीं अल्पवृष्टि और स्त्रीस्त्रीका योग होय वा पुरुषपुरुषसंज्ञक नक्षत्रोंका योग होय तो बादलोंकी छाया तथा नपुंसकनपुंसकका योग होय तो अनावृष्टि होतीहै ॥ ३३१ ॥ यदि जलचारीलग्नमें और वृष्टियोगमें सूर्यके नक्षत्रका

प्रवेश होय तो वहुत अच्छी वर्षा होतीहै ॥ ३३२ ॥ रात्रिमें वा अर्द्धरात्रिमें सूर्यके नक्षत्रका प्रवेश होय तो वहुतजलवाली सुवृष्टि होतीहै और अन्य समयमें सूर्यनक्षत्रका प्रवेश होय तो वर्षा नहीं होतीहै ॥ ३३३ ॥

## अथ सूर्यर्क्षयोगे वृष्टिज्ञानम् ।

आर्द्रादिपंचकं पूभारेवत्यादिचतुष्टयम् ॥ पूर्वाषाढाचतुष्कं च चंद्रर्क्षाणि चतुर्दश ॥ ३३४ ॥ शेषाणि रविधिष्ण्यानि विज्ञेयानि मनीषिभिः ॥ सूर्येचंद्रर्क्षगे वृष्टिश्चंद्रे सूर्यर्क्षगे सति ॥ ३३५ ॥ पूफादिपंचके सूर्ये चंद्रे चंद्रर्क्षगेऽपि च ॥ उभौ चंद्रर्क्षगौ स्यातां स्वल्पा वृष्टिस्तदा भवेत् ॥ तावेव यदि सूर्यर्क्षे तदा वृष्टिर्न जायते ॥ ३३६ ॥

अव सूर्यर्क्षयोगमें वृष्टिज्ञान लिखतेहैं–आर्द्रा, पुनर्वसु, पुष्य, आश्लेषा, मघा, रेवती, अश्विनी, भरणी, पूर्वाषाढा, उत्तराषाढा, श्रवणा, धनिष्ठा ये चौदह नक्षत्र चंद्रमाके हैं ॥ ३३४ ॥ और शेष नक्षत्र सूर्यके हैं ऐसा पंडितोंने कहाहै. सूर्य तो चंद्रमाके नक्षत्रपर और चंद्रमा सूर्यके नक्षत्रपर होंय तो वर्षा होतीहै ॥ ३३५ ॥ पूर्वाफाल्गुनी, उत्तराफाल्गुनी, हस्त, चित्रा इन चार नक्षत्रोंमेंसे किसी नक्षत्रपर सूर्य होय और चंद्रमा अपने नक्षत्रोंमेसे किसी नक्षत्रपर होय अथवा सूर्य चंद्रमा दोनोंही चंद्रमाके नक्षत्रपर होंय तो स्वल्प वृष्टि होतीहै और यदि दोनों ग्रह सूर्यके नक्षत्रपर होंय तो वर्षा नहीं होतीहै ॥ ३३६ ॥

## अथ वर्षाकाले सद्योवृष्टिलक्षणानि ।

नभः काकांडभं गोदृड्निभं तित्तिरसंनिभम् ॥ प्रांत्येजला वा मेघा स्युर्गैरिकजलसन्निभाः ॥ ३३७ ॥ जलजंतुसमा-

कारा मूलाभ्रा सव्यगा अपि ॥ गिरयोजनसंकाशाः सवाष्पशिखिनर्तनम् ॥ ३३८ ॥ शुकनेत्रनिभाः क्षौद्रसंनिभाः सलिलस्वतः ॥ सन्निधौ परिवेषाढ्यश्चंद्रमाः शीघ्रवृष्टिकृत् ॥ ३३९ ॥ विकृतिर्लवणे बालाः सेतुबंधोद्यमाः पथि ॥ जले मीनोत्प्लवो रावो भेकानां नीरसं जलम् ॥ ३४० ॥ व्यालानां मैथुनं वृक्षाद्यारोहः प्रसवस्तथा ॥ मक्षिकाऽनल्पतां यांति सांडाः स्युस्तु पिपीलिकाः ॥ ३४१ ॥ उत्सृष्टाश्च गृहाद्गावो नेच्छंति गमनं बहिः ॥ खनंति भूतलं श्वानो मार्जाराः पशवः खुरैः ॥ ३४२ ॥ यांति वल्यंकुराश्चोर्ध्वं शरटारोहणं तरौ ॥तृणाग्रवृश्चिकारोहो गवामूर्ध्वनिरीक्षणम् ॥ ३४३ ॥ पक्षिणां धूलिभिः स्नानं प्रदोषे मेघगर्जितम् ॥ अहिदंडाकृतिर्मेघः शीतः प्राचीभवो मरुत् ॥ ३४४ ॥ प्रत्यगिंद्रधनुः संध्यारागांधो मेघगर्जनम्॥ प्रागुदक्शैवदिग्जाता रक्तसौदामिनी तथा ॥ ३४५ ॥ मध्ये तीव्रा तपश्चाह्नो नरा निद्रालवो भृशम् ॥ विज्ञेया लक्षणैरेभिः सद्योवृष्टिर्घनागमे ॥ ३४६ ॥

अब वर्षाकालमें सद्योवृष्टिलक्षण लिखतेहैं—आकाशका रंग कौएके अंडेके रंगके समान होय, अथवा गौके नेत्र,वा तीतरके रंगके समान होय, अथवा कोणोंमे भरेहुए जलवाले बादल अथवा पर्वत और कज्जलके समान अथवा जलजंतुओंके समान आकारवाले बादल होंय अथवा मुख्यमेघ दक्षिणभागको चलते होय और पर्वतोंका रंग कज्जलके समान होजाय, आसुओं सहित मोर नाचने लगैं॥३३७॥ ॥ ३३८ ॥ अथवा तोतापपक्षीके नेत्रके समान वा शहतके समान बादल होंय, समीपमें जलका शब्द होय, परिवेषयुक्त चंद्रमा होय तो शीघ्र वृष्टिकारक होताहै ॥ ३३९ ॥ लवण पसीझने लगै, मार्गमे

चालक पुल वांधने लगें, जलमें मछली ऊपरको उछलें और मेढक शब्द करें तो नीरस जलकी वर्षा होतीहै ॥ ३४० ॥ सर्प मैथुन करें, अथवा वृक्षोंपर चढें, सर्पिणी अंडा देवे, मक्खियोंकी बटवार होय, अंडा लेकर चीटी चलें ॥ ३४१ ॥ जंगलमें चरनेके लिये छोडी हुइ गोऍ घरसे वाहिर जानेकी इच्छा न करें, कुत्ता, विलाव, पशु अपने खुरोंसे पृथ्वीको खोदें ॥ ३४२ ॥ वेलोंके अंकुर ऊपरको चलें, वृक्षपर करकैटा चढे, (तृण) घास फूसके ऊपर विच्छू चढें, गोऍ ऊपर आकाशको देखें ॥ ३४३ ॥ पक्षी धूलिमें स्नान करें, प्रदोषसमय मेघ गर्जें, आकाशमें सर्प और दंडाके आकार वादल होवें, शीतल पुरवाई चलै ॥ ३४४ ॥ पश्चिममें इंद्रधनुष दीखे, संध्यासमय लाली अधिक होय, संध्यारागसे नीचे वादल गर्जें; पूर्व, उत्तर, ईशान दिशामें लालरंगकी विजली चमकै ॥ ३४५ ॥ मध्याह्नमें तीव्र घाम पडे, मनुष्योंको अत्यन्त नींद आवै तो इन लक्षणोंसे वर्षाऋतुमें जानना कि, शीघ्रही वर्षा होनेवाली है ॥ ३४६ ॥

## अथोपश्रुतिशकुनाः ।

गणाधीशं प्रपूज्यादौ कार्यं तस्मै निवेद्य च ॥ साक्षतं सफलं तोयपात्रमादाय संव्रजेत् ॥ ३४७ ॥ उपश्रुतिर्महालक्ष्मीश्चांडालगृहवासिनी ॥ यन्मया चिंतितं कार्यं सत्यं वद सुरेश्वरि ॥ ३४८ ॥ भवत्या विदितं सर्वं शकाकार्ये विशेपतः ॥ इत्युक्त्वा शृणुयाद्वाणीं शुद्धां वाक्यत्रयान्विताम् ॥ ३४९ ॥ प्रक्षिप्य च जलं तत्र समागच्छेत्स्वमालयम् ॥ तद्वाक्यस्यानुसारेण फलं ज्ञेयं यथार्थतः ॥ ३५० ॥

अव उपश्रुति शकुन लिखतेहैं-प्रथम गणेशजीका पूजन करै और फिर गणेशजीके सम्मुख अपने कार्यका निवेदन करके अक्षत तथा फलोंसहित जलपात्र लेकर चांडालीके द्वारपर जावे ॥ ३४७॥

और फिर वहां यह मंत्र पढै कि, हे सुरेश्वरि तुम उपश्रुतिनामकी महालक्ष्मीजी हो चाण्डालके गृहमें निवास करतीहो, मैंने जो कार्य विचाराहै उसको सत्य कहो होगा वा नहीं ॥ ३४८ ॥ आप सब कार्योंको जानतीहैं. इंद्रके कार्योंकाभी आपको विशेष ज्ञान है इतना कहनेके पश्चात् उस चाण्डालीके तीन शुभ वचन सुने ॥ ३४९ ॥ तदनन्तर जलको वहीं पृथ्वीपर छोडकर अपने घरको चला आवै उस चांडालीने शुभ वचन कहे होवें तो कार्यका शुभफल और अशुभ वचन कहे होवें तो अशुभ फल जाने ॥ ३५० ॥

## अथ वारविशेषे विशेषः ।

चांडालीभवने सूर्ये चंद्रे नापितमंदिरे॥ रजक्या मन्दिरे भौमे बोधने वैश्यमंदिरे ॥ ३५१ ॥ ब्राह्मण्या मंदिरे जीवे भार्गवे पण्ययोषितः ॥ दास्या द्वारि शनौ यायाच्छ्रोतुं चोपश्रुतिं शुभाम् ॥ ३५२ ॥

अब वारविशेषमें विशेष लिखतेहैं–शुभ उपश्रुति सुननेके लिये रविवारके दिन चाण्डालीके द्वारपर, चंद्रवारके दिन नाईके द्वार-पर, मंगलके दिन धोबिनके द्वारपर, बुधके दिन वैश्यके द्वारपर ॥ ॥ ३५१ ॥ बृहस्पतिके दिन ब्राह्मणीके द्वारपर, शुक्रके दिन वेश्याके द्वारपर, शनैश्चरके दिन चाण्डालीके द्वारपर जावै ॥ ३५२ ॥

## अथ रघुवंशादि ।

शकुना रघुवंशस्य दुर्गाया निगमस्य वा ॥ पूजितं पुस्तकं पुष्पैरक्षतैश्च फलादिभिः ॥ ३५३ ॥ शनौ संस्थाप्य सूर्याह्ने प्रातरेव विलोकयेत्॥ कुमार्योक्तप्रमाणेन निष्कास्य श्लोकमुत्तमम् ॥ ३५४ ॥ विज्ञेयाः शकुनास्तस्माद्यथार्थ-वचना हि ते ॥ अविसर्गांतपूर्वार्द्धस्तवर्गोत्तरपंचमः ॥ स्तुतिलिङ्गवर्जितः श्लोकः शकुने च शुभावहः ॥ ३५५ ॥

अव रघुवंशादि शकुन लिखते हैं-शनैश्चरके दिन रघुवंश वा रामायण, अथवा दुर्गाकी, वा वेदकी पुस्तकको रखकर फूल, अक्षत, वा फलादिकोंसे पूजन करै और रविवारके दिन प्रातःकाल कुमारी कन्यासे पूछे कि, इसमेंसे कौनसा श्लोक निकालें ? तव जौन संख्यक श्लोकके निकालनेके लिये वतलावै उसीको देखै और उसी श्लोकसे शकुन पहिचानै क्योंकि, उक्त पुस्तकोंके श्लोक ठीकठीक फल कहदेतेहैं, यदि श्लोकके पूर्वार्द्धके अंतमें विसर्ग नहीं होय और श्लोकके पांचवें अक्षरसे पीछे तवर्ग होय तथा उस श्लोकमें स्तुति-संबंधि लिट् लकार नहीं होय तो ऐसा श्लोक शकुनमें शुभकारक होताहै ॥ ३५३ ॥ ३५४ ॥ ३५५ ॥

## अथ सामुद्रिकपरीक्षा ।

विशालभालवक्राक्षिवक्षोवाहुकरांघ्रिकम् ॥ सुवृत्तमस्तकं नाभिगंभीरा नासिकोन्नता ॥ ३५६ ॥ स्निग्धदंतत्वचं केशाः श्यामाः स्निग्धाश्च कुंचिताः ॥ नेत्रप्रांत्यारुणं स्निग्धं विशालं कृष्णतारकम् ॥ ३५७ ॥ दक्षावर्तवपू रोमास्निग्ध-गंभीरनिःस्वनः ॥ सफेनमूत्रको धन्यो नरो नोत्पल-पार्ष्णिकः ॥ ३५८ ॥ नरो मातृमुखो धन्यो नारी पितृमुखी तथा ॥ रक्तमोष्ठनखं पाणी पादयुग्मतलं शुभम् ॥ ३५९ ॥ औदार्यधैर्यगांभीर्यमहारंभयशः प्रियः ॥ प्रसन्नवदनो वंशाभिमानी प्रियसत्यवाक् ॥ ३६० ॥ नीतिमान्गुरुवाक्यस्थः शुचिर्दक्षोऽथ पापभीः ॥ इत्यादिगुण-संपन्नो नरो भवति भाग्यवान् ॥ ३६१ ॥ रेखा या तर्जनीं याता तिर्यक्साऽऽयुष्यसंज्ञका ॥ तर्जन्यंगुष्ठयोर्मध्ये तिर्यक्से-श्वर्यसंज्ञका ॥ ३६२ ॥ मणिवंधतरैश्वर्यं रेखामूलं युनक्ति या ॥ सा रेखा पितृवंशाख्या त्वच्छिन्ना गेहसौख्यदा ॥ ३६३ ॥

सम्यग्भोगवती चैषा मातृवंशविवर्द्धनी ॥ आयुःकनिष्ठ-
योर्मध्ये रेखा कतिकलत्रिका ॥ ३६४ ॥ करभांत्य
गता रेखा सा तु मातुलवर्गिका ॥ सूक्ष्मा मातृष्वसुः
स्थूला मातुलस्यैवमन्यतः ॥ ३६५ ॥ अंगुष्ठमूल-
रेखाभिर्विज्ञेया संततिर्बुधैः ॥ सूक्ष्माभिः कन्यकाः पुत्राः
स्थूलाभिश्च तथाविधाः ॥ ३६६ ॥ अच्छिन्नाभिन्नरेखाभिः
संततिर्दीर्घजीविनी॥रेखा याऽनामिकामूले यशःपुण्याभिधा
तु सा ॥ ३६७ ॥ धनरेखा तु सा याता मणिबंधात्तु
मध्यमा ॥ स्याच्चेदखंडिता पूर्णा सोर्ध्वरेखा तु राज्यदा ॥
॥ ३६८ ॥ गंभीराः सुंदराः स्निग्धाः शुभदा मधुपिंगलाः ॥
दक्षिणे तु करे पुंसां वामाक्षीणां तु वामके ॥ ३६९ ॥
अंगुष्ठांते यवो यस्य स भवेद्राज्यभाङ्नरः ॥ श्रीवत्साश्वर-
थादर्शध्वजस्तंभगिरिस्रजः ॥ ३७० ॥ हस्ती छत्रांबुजे कुंभः
श्रीवत्सकुलिशांकुशम् ॥ भृंगारो व्यंजनं वीणा यवो
मत्स्यादिकं तथा ॥ ३७१ ॥ करपादतले यस्य स भवे-
द्धरणीपतिः ॥ खल्वाटस्तु धनी विद्वान्दंतुरः संहतांगुलिः
॥ ३७२ ॥ धनाढ्योऽल्पवयःशूरो ह्युदारो विरलांगुलिः ॥
तिलः पादतले हस्ते नासायां दृष्टिगोचरः॥ ३७३ ॥ हृदि
प्रजनने भाले धन्यभाग्यप्रदो नृणाम् ॥ रेखाः करतले
चेत्स्युरुक्ताश्चाप्यधिकास्तथा ॥ ३७४ ॥ रूक्षाः सूक्ष्माः
सिताश्छिन्नास्तदा स्याच्च दरिद्रता ॥ स्थूलं प्रजननं दीर्घं
वक्रं वानेकधारणम् ॥ ३७५ ॥ यस्य चेत्स दरिद्रः स्याच्छु-
भलक्षणवानपि ॥ दरिद्रः करयुग्मेन कंडूयति शिरस्तु
यः ॥ ३७६ ॥

अब सामुद्रिकपरीक्षा लिखतेहैं–शिर, मुख, नेत्र, हृदय, भुजा, हाथ, पैर इतने अंग (विशाल) अर्थात् बडे होंय और मस्तक

गोल होय, नाभि गहरी होय, नासिका ऊंची होय ॥ ३५६ ॥ दाँत तथा त्वचा चिकनी होय और काले, चिकने, घुंघराले बाल होय, नेत्रप्रान्त लाल होंय, नेत्रकी पुतली विशाल तथा चिकनी और काली होय ॥ ३५७ ॥ शरीरके रोम दक्षिणावर्त्त होंय, शब्द मधुर तथा गम्भीर होय, मूत्र फेन सहित होय, एडी कमलसी लाल होंय तो ऐसे लक्षणोंवाला पुरुष धन्य होताहै ॥ ३५८ ॥ माताके मुखके सदृश मुखवाला पुरुष और पिताके मुखसमान मुखवाली स्त्री धन्य होतीहै. होठ, नख, हाथ, पाँवका तल ये अंग लाल वर्णके होंय तो शुभ होतेहैं ॥ ३५९ ॥ उदारता, धैर्य, गम्भीरता, बडे कामका आरंभ, यशके काम करनेसे प्रसन्न, तथा प्रसन्न मुख, वंशाभिमानी प्रिय और सत्य बोलनेवाला ॥ ३६० ॥ नीतिमान्, गुरुवाक्यको माननेवाला, पवित्र रहनेवाला, चतुर, पापोंसे भय करनेवाला इत्यादि गुणयुक्त पुरुष भाग्यवान् होताहै ॥ ३६१ ॥ जो रेखा तर्जनी अंगुलीके समीप तिरछी होय सो आयुकी रेखा होतीहै और तर्जनी तथा अँगूठाके मध्यमें जो रेखा तिरछी होतीहै सो ऐश्वर्यकी रेखा कहातीहै ॥ ३६२ ॥ पहुँचेके मूलसमीप जो रेखा जुडी होतीहै सो ऐश्वर्यकी देनेवाली कहीहै और येही पितृवंशा नामकी है. पूर्ण होय तो गृहसौख्यकी देनेवाली है ॥ ३६३ ॥ और यहही रेखा अच्छे भोगोंकी देनेवाली मातृवंशकी वढानेवाली होतीहै. तथा आयुकी रेखा और कनिष्ठा अंगुलीके मूलके मध्यमें जो रेखा होतीहै सो कांत तथा स्त्रीकी कहाती है ॥ ३६४ ॥ पहुँचेसे लेकर कनिष्ठिका अँगुलीतकका जो भाग है उसके नीचेकी रेखा मातुलवर्गकी होती है. यदि वह रेखा सूक्ष्म होय तो मौसीकी और स्थूल होय तो मामाकी होतीहै ॥ ३६५ ॥ अंगुष्ठके मूलमें जो रेखाएँ होतीहैं वे सन्तानकी कहातीहैं, यदि सूक्ष्म होंय तो कन्या

और स्थूल होंय तो पुत्रोंको देनेवाली हैं ॥ ३६६ ॥ यदि ये उक्त रेखा कटी, टूटी नहीं होंय तो दीर्घजीविनी संतान होतीहै और जो रेखा अनामिकाके मूलमें होतीहै वो यश और पुण्यकी देनेवाली होतीहै ॥ ३६७ ॥ जो रेखा पहुँचेसे मध्यमा अंगुलीतक जातीहै सो धन रेखाहै; यदि वह अखंडित तथा पूर्ण होय तो ऊर्द्धरेखा कहातीहै और राज्यकी देनेवाली है ॥ ३६८ ॥ गंभीर, सुन्दर, चिकनी, शहतके समान पिङ्गलवर्णकी रेखा शुभदायक होतीहै. पुरुषोंके दाहिने और स्त्रियोंके बाँये हाथमें देखे. अँगूठाके नीचे यवके आकारकी रेखा होय तो वह पुरुष राज्यभागी होताहै. श्रीवत्स, घोडा, रथ, दर्पण, ध्वजा, स्तम्भ, पर्वत, माला ॥ ३६९ ॥ ॥ ३७० ॥ हाथी, छत्र, कमल, कलश, श्रीवत्स, वज्र, अंकुश, सुवर्णका पात्र, पंखा, वीणा, यव, मत्स्य इत्यादिके चिह्न जिस मनुष्यके हाथकी हथेली और पैरके तलवेमें होंय वह पृथ्वीपति राजा होताहै और जो पुरुष चन्दुला होय अर्थात् जिसके शिरपर बाल नहीं जमै वह धनी होताहै और जिसके बड़े बड़े दांत होठोंसे बाहिर निकल आयेहोंय वह विद्वान् होताहै और जिसकी अंगुली भिड़ी हुई होंय वहभी धनाढ्य होताहै और जिसकी अंगुली मिलानेपर ( छिद्रसहित ) छीदी होय तो वह थोडी उमरमेंही शूर तथा उदार होजाताहै जिसके पाँवके तलवेमें हाथकी हथेलीमें और नासिकापर तिल दीखता होय और हृदय, मेढ़् परभी तिल होय तो उसको लाभ होताहै और धन तथा भाग्यकी वृद्धि होतीहै. यदि हाथकी हथेलीमें उक्त रेखाएँ रूखी, सूक्ष्म, श्वेत, कटी टटी अधिक होयँ तो दरिद्रता होतीहै और जिसका लिंग लंबा तथा टेढ़ा होय और मूत्रोत्सर्गके समयमें अनेक तरहसे धार निकले तो शुभ लक्षणवाला पुरुषभी दरिद्री होजाताहै और जो

पुरुष दोनो हाथोंसे शिरको खुजाताहै सोभी दरिद्री होजाताहै ॥ ॥ ३७१ ॥ ३७२ ॥ ३७३ ॥ ३७४ ॥ ३७५ ॥ ३७६ ॥

## अथ स्त्रीणां विशेषः ।

शुभानि यानि चिह्नानि पुंसां प्रोक्तानि सूरिभिः ॥ तान्येव योषितां योऽत्र विशेषः प्रोच्यते तु सः ॥ ३७७ ॥ नटद्भ्रू विकटं भालं विशालं प्रोन्नतं तथा ॥ पादांगुलिद्वयं चांत्यं गमने न स्पृशेद्धुवम् ॥ ३७८ ॥ यस्याः सा विधवा नारी बह्वाहाराऽपि तद्विधा ॥ दीर्घस्फिग् हंति भर्तारं दीर्घभाला तु देवरम् ॥ ३७९ ॥ दुष्टा दीर्घोदरी नारी श्वशुरं हंति निश्चितम् ॥ स्वल्पगुह्या तथा शुक्रनितंबा पतिघातिनी ॥ ॥ ३८० ॥ कुलं दीर्घगला हंति निःस्वाऽतिह्रस्वनाभिका ॥ पृथुनासा भवेच्चंडी दुःखिता कमठोदरी ॥ ३८१ ॥ हसिते गर्त्तगंडा या दुःशीला सा प्रकीर्तिता ॥ मिलद्भ्रूयुगुलावर्त्त-केशभालाऽल्पभालिका ॥ ३८२ ॥ दीर्घरोमाचिता ग्रीवा विम्बोष्टी विकरालिका ॥ इत्याद्यैरशुभैश्चिह्नैर्युक्तां नारी परित्यजेत् ॥ ३८३ ॥

अब स्त्रियोंके विशेष लिखतेहैं—पंडितोंने जो शुभ चिह्न पुरुषोंके कहेहैं वेही चिह्न स्त्रियोंकेभी शुभ कहेहैं परन्तु यहांपर स्त्रियोंके कुछ विशेष चिह्नोंका वर्णन किया जाताहै ॥ ३७७ ॥ चञ्चल भौएँ, ऊंचा, भयंकर तथा बड़ा मस्तक, पाँवके अन्तकी दो अंगुली चलते समय पृथ्वीसे न लगें ॥ ३७८ ॥ ऐसे लक्षण जिस स्त्रीके होयँ सो विधवा होजातीहै. इसी प्रकार बहुत खानेवाली स्त्रीभी विधवा होतीहै लंबे कूलोंवाली स्त्री भर्त्ताका नाश करतीहै और लंबे ललाटवाली देवरका ॥ ३७९ ॥ और दीर्घ पेट

वाली स्त्री दुष्टा होतीहै, निश्चयही श्वशुरका नाश करतीहै. छोटी गुदावाली सफेद चूतडोंवाली स्त्री पतिकी मारनेवाली होतीहै ॥ ३८० ॥ जिसका गला लम्बा होय वह स्त्री कुलका नाश करती है. अति छोटी नाभिवाली स्त्री निर्धन होतीहै. मोटी नासिकावाली स्त्री क्रोधिनी होतीहै. कछुएके समान पेटवाली स्त्री दुःखित रहती है ॥ ३८१ ॥ हँसनेमें जिसके गालोंमें गढ़ा पड़े वह स्त्री दुःशीला होतीहै जिसकी दोनो भोहें मिली होंय, ललाटपर भौंरी तथा बाल होंय, छोटा मस्तक होय ॥ ३८२ ॥ लंबेलंबे रोमोंसे ग्रीवा भरी होय, लंबे होट होंय, भयंकर रूप होय इत्यादि अशुभ चिह्नों-वाली स्त्रीका परित्यागकर देवे ॥ ३८३ ॥

## अथ स्त्रीणां शुभचिह्नानि ।

विशाललोचना तन्वी श्यामा मधुरभाषिणी ॥ कृष्णलंब-कचा गौरी श्लक्ष्णगात्रा मनोहरा ॥ ३८४ ॥ हंसेभगमना मृद्वी चंद्रवक्त्रा नितंबिनी ॥ सुचरित्रा मिताहारा गूढगुल्फा कृशोदरी ॥ ३८५ ॥ लघुहस्तांघ्रिका कंबुग्रीवा वृत्तोन्नत-स्तनी ॥ इत्यादिलक्षणोपेता सुभगा पुत्रिणी शुभा ॥३८६॥

अब स्त्रियोंका शुभचिह्न लिखतेहैं—बड़े नेत्रोंवाली, हलके शरीर-वाली, श्यामांगी, मधुर बोलनेवाली, काले तथा लंबे केशोंवाली, गौर वर्णवाली, चिकने शरीरवाली, मनकी हरनेवाली ॥ ३८४ ॥ हंस और हाथीके समान चलनेवाली, कोमल शरीरवाली, चंद्रस-मान मुखवाली, बडे नितंबोंवाली, अच्छे गुणोंवाली, थोड़ा भोजन करनेवाली, मांसमें छिपेहुए टकनोंवाली, पतले पेटवाली ॥ ३८५ ॥ छोटेछोटे हाथ पैरोंवाली, शंखके समान ग्रीवावाली, गोल तथा ऊंचे स्तनोंवाली इत्यादि लक्षणोंसे युक्त स्त्री शुभ होती और सौभा-ग्यवती तथा पुत्रवती होतीहै ॥ ३८६ ॥

पुरुष दोनों हाथोंसे शिरको खुजाताहै सोभी दरिद्री होजाताहै ॥ ॥ ३७१ ॥ ३७२ ॥ ३७३ ॥ ३७४ ॥ ३७५ ॥ ३७६ ॥

## अथ स्त्रीणां विशेषः ।

शुभानि यानि चिह्नानि पुंसां प्रोक्तानि सूरिभिः ॥ तान्येव योषितां योऽत्र विशेषः प्रोच्यते तु सः ॥ ३७७ ॥ नटद्भ्रू विकटं भालं विशालं प्रोन्नतं तथा ॥ पादाङ्गुलिद्वयं चांत्यं गमने न स्पृशेद्ध्रुवम् ॥ ३७८ ॥ यस्याः सा विधवा नारी बह्वाहाराऽपि तद्विधा ॥ दीर्घस्फिग् हंति भर्तारं दीर्घभाला तु देवरम् ॥ ३७९ ॥ दुष्टा दीर्घोदरी नारी श्वशुरं हंति निश्चितम् ॥ स्वल्पगुह्या तथा शुष्कनितंबा पतिघातिनी ॥ ॥ ३८० ॥ कुलं दीर्घगला हंति निःस्वाऽतिह्रस्वनाभिका ॥ पृथुनासा भवेच्चंडी दुःखिता कमठोदरी ॥ ३८१ ॥ हसिते गर्त्तगंडा या दुःशीला सा प्रकीर्तिता ॥ मिलद्भ्रूयुगुलावर्त्त-केशभालाऽल्पभालिका ॥ ३८२ ॥ दीर्घरोमाचिता ग्रीवा विम्बोष्ठी विकरालिका ॥ इत्याद्यैरशुभैश्चिह्नैर्युक्तां नारी परित्यजेत् ॥ ३८३ ॥

अब स्त्रियोंके विशेष लिखतेहैं-पंडितोंने जो शुभ चिह्न पुरुषोंके कहेहैं वेही चिह्न स्त्रियोंकेभी शुभ कहेहैं परन्तु यहांपर स्त्रियोंके कुछ विशेष चिह्नोंका वर्णन किया जाताहै ॥ ३७७ ॥ चञ्चल भौंएँ, ऊंचा, भयंकर तथा वड़ा मस्तक, पॉवके अन्तकी दो अंगुली चलते समय पृथ्वीसे न लगें ॥ ३७८ ॥ ऐसे लक्षण जिस स्त्रीके होयँ सो विधवा होजातीहै. इसी प्रकार वहुत खानेवाली स्त्रीभी विधवा होतीहै. लंबे कूलोंवाली स्त्री भर्त्ताका नाश करतीहै और लंबे ललाटवाली देवरका ॥ ३७९ ॥ और दीर्घ पेट

वाली स्त्री दुष्टा होतीहै, निश्चयही श्वशुरका नाश करतीहै. छोटी गुदावाली सफेद चूतडोंवाली स्त्री पतिको मारनेवाली होतीहै ॥ ३८० ॥ जिसका गला लम्बा होय वह स्त्री कुलका नाश करती है. अति छोटी नाभिवाली स्त्री निर्धन होतीहै. मोटी नासिकावाली स्त्री क्रोधिनी होतीहै. कछुएके समान पेटवाली स्त्री दुःखित रहती है ॥ ३८१ ॥ हँसनेमें जिसके गालोंमें गढ्ढा पड़े वह स्त्री दुःशीला होतीहै जिसकी दोनो भौंहें मिली हों, ललाटपर भौंरी तथा वाल होंय, छोटा मस्तक होय ॥ ३८२ ॥ लंबेलंबे रोमोंसे ग्रीवा भरी होय, लंबे होट होंय, भयंकर रूप होय इत्यादि अशुभ चिह्नोंवाली स्त्रीका परित्यागकर देवे ॥ ३८३ ॥

## अथ स्त्रीणां शुभचिह्नानि।

विशाललोचना तन्वी श्यामा मधुरभाषिणी ॥ कृष्णलंबकचा गौरी श्लक्ष्णगात्रा मनोहरा ॥ ३८४ ॥ हंसेभगमना मृद्वी चंद्रवक्त्रा नितंबिनी ॥ सुचरित्रा मिताहारा गूढगुल्फा कृशोदरी ॥ ३८५ ॥ लघुहस्तांघ्रिका कंबुग्रीवा वृत्तोन्नतस्तनी ॥ इत्यादिलक्षणोपेता सुभगा पुत्रिणी शुभा ॥३८६॥

अब स्त्रियोंका शुभचिह्न लिखतेहैं—वड़े नेत्रोंवाली, हलके शरीरवाली, श्यामांगी, मधुर वोलनेवाली, काले तथा लंबे केशोंवाली, गौर वर्णवाली, चिकने शरीरवाली, मनकी हरनेवाली ॥ ३८४ ॥ हंस और हाथीके समान चलनेवाली, कोमल शरीरवाली, चंद्रसमान मुखवाली, वडे नितंबोंवाली, अच्छे गुणोंवाली, थोड़ा भोजन करनेवाली, मांसमें छिपेहुए टकनोंवाली, पतले पेटवाली ॥ ३८५ ॥ छोटेछोटे हाथ पैरोंवाली, शंखके समान ग्रीवावाली, गोल तथा ऊंचे स्तनोंवाली इत्यादि लक्षणोंसे युक्त स्त्री शुभ होती और सौभाग्यवती तथा पुत्रवती होतीहै ॥ ३८६ ॥

## अथ सामान्यतः शुभलक्षणानि ।

अर्चितं वचनं चेतश्चोन्नतं सुभगं वपुः ॥
पापभीरुमतिश्चोक्ताश्चिह्नैरन्यैश्च योषितः ॥ ३८७ ॥

इति श्रीमद्दैवज्ञरावलहरिशंकरसूरिसूनुगणपतिकृते मुहूर्त्त-गणपतौ मिश्रप्रकरणश्चतुर्विंशम् ॥ २४ ॥

अब सामान्य शुभलक्षण लिखतेहैं—श्रेष्ठ वचन, प्रसन्न चित्त, ऊंचा तथा सुंदर शरीर, पापोंसे डरनेवाली बुद्धि इत्यादि शुभ चिह्नोंसे युक्त स्त्री शुभ होतीहै ॥ ३८७ ॥

इति श्रीमद्दैवज्ञरावलहरिशंकरसूरिसूनुगणपतिकृते मुहूर्त्तगणपतौ श्रीयुतपंडितवर्यवेणीरामात्मजपंडितरामदयालुशर्म्मकृतभाषा-टीकासमलंकृतं मिश्रप्रकरणं चतुर्विंशम् ॥ २४ ॥

---

## अथ ग्रंथालंकारवर्णनम् । तत्रादौ राज्ञो वर्णनम् ।

गौडोर्वीशशिरोविभूषणमणिर्गोपालदासोऽभवन्मांधातेत्यभिरक्षितायलभत ख्यातिं स दिल्लीश्वरात् ॥ तत्पुत्रो विजयी मनोहरनृपो विद्योतते सर्वदा दानैर्येन च दानखंडविहिते-र्विश्वेश्वरस्तोष्यते ॥ १ ॥ गांभीर्यप्रौढगौडान्वयकुमुदगणानंदिचंद्राभिरामः प्रोद्दामस्वच्छकीर्तिव्रततिपिहितदिङ्मंडलीमंडनश्रीः ॥ भूयः सत्पात्रदानप्रणयशतगुणस्वर्णपूर्णातिसार्थः सर्वार्थावाप्तिधन्यो जगति विजयते मानभूमीश्वरोऽयम् ॥ २ ॥ प्रीत्याऽप्पुजदीशपार्थिवतनूराधृत्तिभिः कोटिशो योऽकार्षीत्कनकेन षोडशमहादानान्यथान्यान्यपि ॥ यो धेनूर्दशपर्वतांश्च विधिवत्प्रादाद्द्विजेभ्यो मुदा सोऽयं गौडमनोहरो नरपतिर्वर्वर्ति सर्वोत्तरः ॥ ३ ॥

अब ग्रंथालंकारवर्णन लिखतेहैं—तहां पहिले राजाका वर्णन लिखतेहैं—गौड़देशके राजाओंके शिरोविभूषणमणि राजा गोपालदासजी हुए, उन्होने दिल्लीके बादशाहकी बड़ी सहायता तथा रक्षा कीथी, इसी कारणसे बादशाहसे उन्होंने मांधाताका (ख्याति) खिताब पायाथा. मांधाताके पुत्र मनोहरसिंह नामक विजयी तथा दानी होकर प्रकाशको प्राप्त हैं, जिन्होंने दानखंडोक्त दानकरके विश्वेश्वर भगवान्‌को प्रसन्न कियाहै ॥ १ ॥ गम्भीरतासे बड़ा जो गौडवंशरूप कुमुदसमूह तिसके लिये आनंद देनेवाले चंद्रमाके समान सुन्दर और अतिश्रेष्ठ तथा निर्मल कीर्तिलतासे छाई हुई दिशाओंमें सुशोभित लक्ष्मीवाले और फिर सुपात्रोंके दान मानसे सौगुणा जो सुवर्ण तिससे ( अतिसार्थ ) सजातीय समूहको पूर्ण करनेवाले और सब अर्थोंकी प्राप्तिसे अतिधनवाले. ये मानरूपभूमिके राजा जगत्‌में सबसे अधिक ऐश्वर्यवान् हैं ॥ २ ॥ जिन्होंने प्रीतिसे करोडों बार शिवजीके पार्थिव शरीरोंका पूजन कियाहै और जिन्होंने सुवर्णके षोडश महादान तथा अन्य प्रकारके दान, गौएँ, अन्नके दश पर्वत ब्राह्मणोंके लिये विधिपूर्वक प्रसन्नतासे दियेहैं ऐसे ये गौड़देशके राजा मनोहरसिंह सबसे अधिक वर्त्तमान हैं ॥ ३ ॥

## अथ राजकुमाराणां वर्णनम् ।

यो मूर्त्तः पुरुषोत्तमस्य तपसां पुण्यस्य पूरोच्चयो गौडप्रौढमनोहरेंद्रनृपतेरानंदकंदांकुरः ॥ राकानायकवत्प्रियः स्वसुहृदां नारीदृशां कामवद्राजत्युत्तमराम एष सुचिरं श्रीमान्कुमाराग्रणीः ॥ ४ ॥ शौर्योद्दामलसत्प्रतापतपनप्रौढद्विषद्व्रातहृत्सर्वार्थिव्रतकल्पवृक्षमहिमः कंदर्पतुल्याकृतिः ॥ गौडोर्वीशमनोहरक्षितिपतेर्वंशांबुजोद्योतकः श्रीमानुत्तमराम एष युवराड् भास्वानिव भ्राजते॥५॥शौर्यौदार्यसुतीक्ष्ण-

धीरधिषणागांभीर्यशास्त्रज्ञतादेवब्राह्मणसद्गुरुप्रणयितावश्यात्मतासंपदाम् ॥ एकं धाम निरीक्षितुं विधिरदध्यं श्रीकुमाराग्रणीः सोऽयं श्रीपुरुषोत्तमान्वयमणेरुद्योत उद्योतते ॥ ६ ॥ श्रीशंभुपूजनसुधापरिपूर्णमूर्त्तेर्गौडाधिनायकमनोहरसिंधुसारात् ॥ पुण्यप्रकाशपुरुषोत्तमसिंहरत्नादुद्योतसिंह उदितोभ्युदयी विभाति ॥ ७ ॥ सौजन्यामृतसिंधुरिंदुमहिमासौहार्दरत्नाकरः संहित्यादिकलाकलापकुशलः शैवप्रभावोज्ज्वलः ॥ गौडोर्वीशमनोहरेंद्रनृपतेः सूनुः कुमारः प्रभोर्लक्ष्मीरामकुमार एष जयति प्रौढप्रतापोज्ज्वलः ॥ ८ ॥ आन्वीक्षिक्यां धिषणेनिपुणो दंडनीत्यां प्रचंडो वार्त्तावृत्तौ सहजकुशलो धर्मधर्माधिगामी॥षाड्गुण्यश्च प्रकृतिविहितो पापचातुर्यधुर्यो लक्ष्मीरामः शिवपदरतः पूर्णकामो विभाति ॥ ९ ॥ तोषादेषां निखिलजनतानंदनं ग्रंथरत्नं ज्योतिर्दीप्तं प्रकरणगणैर्भूरिभेदैर्व्यधायि ॥ सारोद्धारं गणपतिविदा चारुगुम्फं सुवर्णैरंतःपूर्णसकलविदुषां कर्णयोर्भूषणाय ॥ १० ॥

अब राजकुमारोंका वर्णन लिखतेहैं—पुरुषोत्तम भगवान्‌कीसी मूर्तिवाले, तप तथा पुण्योंके प्रवाहराशिके समान, अपने मित्रोंके लिये चंद्रमाके समान प्यारे, स्त्रियोंके नेत्रोंके लिये कामदेवके समान श्रीमान् कुमारोंमें अगुआ गौड़देशके राजेन्द्र मनोहरसिंहजूके आनन्दकन्दांकुर पुत्र यह उत्तमरामजी बहुत दिनोंसे प्रकाशको प्राप्त हैं ॥ ४ ॥ उत्कृष्ट शूरतासे शोभायमान जो प्रतापरूप सूर्य तिस करके-बड़ेबड़े शत्रुओंके समूहको नाश करनेवाले, सब प्रकारके अर्थोंवाले, व्रतरूप कल्पवृक्षसे सत्कार पानेवाले, कामदेवके समान आकृतिवाले, गौडदेशाधिप मनोहरसिंहजूके कुलकमलके खिलानेवाले श्रीमान् युवराज यह उत्तमरामजू सूर्यके समान प्रका-

शको प्राप्तहैं ॥ ५ ॥ शूरता, उदारता, भलेप्रकार तीक्ष्ण तथा धीरबुद्धि, गंभीरता, शास्त्रज्ञता, देवता और ब्राह्मण तथा सद्गुरुओंमें प्रेमता और मनकी वश्यता इत्यादि संपदाओंके एक स्थान देखनेके लिये जिसको ब्रह्मा देतेभये, सो यह पुरुषोत्तमजूके वंशरूपमणिके चमकानेवाले भूप यह कुमाराग्रणी उद्योतसिंहजूहैं ॥ ६ ॥ श्रीशिवजूके पूजनरूप अमृतसे परिपूर्ण मूर्त्तिवाला और गौडाधिपति मनोहरसिंहनामक समुद्रका सारभूत जो पुण्यप्रकाश पुरुषोत्तमसिंहनामक रत्न तिससे उद्योतसिंह नामी प्रतापी पुरुष उदय होकर प्रकाशको प्राप्तहैं॥७॥सुजनतारूपी अमृतसमुद्रकेलिये चंद्रमाकीसी महिमावाले, सुहृदताके समुद्र, साहित्यादि कलासमूहोंमें कुशल, शिवजूके प्रभावसे निर्मल तेजवाले, सामर्थ्ययुक्त,उत्कृष्टप्रभावसे उज्ज्वल यह लक्ष्मीराम नामक कुमार गौड़देशाधिपति मनोहरसिंहजूके छोटे पुत्रहैं ॥८॥ ( आन्वीक्षिकी ) तर्कविद्यामें निपुण बुद्धिवाले, ( दंडनीति ) अर्थविद्यामें तेजवाले ( वार्त्तावृत्ति ) आजीवन विद्यामें स्वाभाविक कुशल, धर्म कर्मके जाननेवाले, षड्गुणयुक्त ( प्रकृति* ) से शोभायमान, पापरहित, चातुर्यके धारण करनेवाले, शिवचरणोंके भक्त, पूर्णकामनावाले लक्ष्मीरामजू प्रकाशको प्राप्तहैं ॥ ९ ॥ इन सब राजा युवराज आदिकी प्रसन्नतासे गणपतिनामक ज्योतिर्विदने अनेक प्रकारके प्रकरणोंसे युक्त सब ग्रंथोंका सारोद्धाररूप, तथा सकलजनसमूहको आनंद देनेवाला ज्योतिषसे प्रकाशित, सुन्दर गुम्फित, सुवर्णोंसे भीतर पूर्ण यह ग्रन्थरत्न सकल विद्वानोंके कर्णभूषणार्थ बनायाहै ॥ १० ॥

## अथ ग्रंथकर्त्तुः कुलपरंपरावर्णनम् ।

यो जज्ञे गुर्जरेषु द्विजकुलमहितोदीच्यजातिः सहस्रः
सच्छीलो रावलाख्यः सकलनृपतिभिः पूजितः श्लाघ्य-

* राजा, मन्त्री, मित्र, खजाना, देश, किला, सेना ये सात राज्यके अंग है और इन्हींको प्रकृति कहतेहैं

लक्ष्मीः ॥ भारद्वाजस्य गोत्रे कृतविमलयशा ब्रह्मनिष्ठो वरिष्ठो ब्रह्मर्षिः ख्यातनामाऽपर इव भगवाञ्छ्रीवसिष्ठो गरिष्ठः ॥ ११ ॥ शरद्विमलचंद्रिकाप्रथितकांतिपूरोदधौ यदीययशसां भरैर्दशदिशोऽभवन्नुज्ज्वलाः॥ सुतं खलु यशोधरं कुलसुधांशुमस्यादरात्सदातहरिदर्शनं बुधजना मुदावीवदन् ॥ १२ ॥ आसीत्तस्यात्मजन्मा निगमपरदृशां रामदासो निवासो यः प्रश्नादेशवाग्भिर्व्यरचदखिलकं भूपचक्रं वशे स्वे ॥ चूडारत्नप्रदीपैरवनितलभुजां द्योतमाजांघ्रिमूलो वृद्धत्वे भक्तिहृष्टो वपुषि परिणते प्राप्य काशी विमुक्तः ॥ १३ ॥ तस्यासीत्तनयोम्बुधेरिव विधुः श्रौताहिताग्निः सदा शांतोदांत उदारधीः सुतपसा प्राप्तानुभावाग्रणीः ॥ काशीं प्राप्य विमुक्तिमाप खलु यो दैवज्ञतातत्त्ववित्स्वात्मज्ञो हरिशंकरो मुनिवरोऽद्वैताद्यथार्थाभिधः ॥ १४ ॥ तस्यात्मजः सकलशास्त्रकलाप्रवीणो ज्योतिर्विदः श्रुतिविदश्च गुरोः प्रसादात् ॥ ग्रंथं मुहूर्त्तगणपत्यभिधं विधाय प्रीत्याऽर्पयच्छिवपदे गणपत्यभिज्ञः ॥ १५ ॥ भूरिप्रभेदसुमुहूर्त्तगणाधिपत्वात्कार्येषु विघ्नहरणाच्च गणेशतुल्यः॥ विद्योतते गणपतिर्द्विजनिर्मितत्वाद्ग्रंथो मुहूर्त्तगणपत्यभिधस्त्रिधाऽयम् ॥ १६ ॥ विद्याग्मासुतजयातिथिपूर्णकामो निर्व्यूढयोगकरणामृतसिद्धिचारः॥ मौंजीविवाहगृहमंगलमंडनाढ्यो पूज्यो मुहूर्त्तगणपत्यभिधो विभाति ॥ १७॥ ज्योतिर्विदाभरणभव्यवसंतराजज्योतिर्निबंधगणमंडनरत्नमालाः ॥ ग्रंथान्मुहूर्त्तपदपूर्वकतत्वदीपमार्त्तंडचिंतितमणिप्रभुकल्पवृक्षान् ॥ १८ ॥ सम्यग्विचार्यकृतिनां विदुषां मतेन श्लोकैः प्रसिद्धसुगमार्थपदैः प्रणीतः ॥ ग्रंथो मुहूर्त्तगणपत्यभिधो गुणज्ञैः प्रीत्या स्वचित्तसदने परिपूजनीयः ॥ १९ ॥ अत्रा-

गमांतरगतं खलु यद्रहस्यं तद्वर्णितं सुजनशिष्यदयावशेन ॥ नासूयकाय कुटिलाय च नास्तिकाय शुश्रूषया विरहिताय कदापि दद्यात् ॥ २० ॥ चूडाभूषाब्दकास्यो रविशशिनयनश्चायनद्वंद्वकुंभो मासैः सत्कर्णबाहुर्भगणकरणसद्योगसंक्रांतिमालः ॥ रत्नालंकारवस्त्रोपनयपरिणयोद्यन्मुहूर्तालिशुंडो यात्रादंतोथ मिश्रप्रकरणकुसुमोत्तंसदूर्वांकुरश्च ॥२१॥ वारंवारप्रवृत्तातिथिकृतविजयानंदयोगादिसिद्धिर्यज्ञाधानप्रतिष्ठाजनिविधिमहितो नामसंस्कारकांतः ॥ वास्तुप्रासादशोभोद्धतसृणिपरशुर्वृष्टिपातापवादैः ख्यातो राजाभिषेकाज्जयति गणपतिः सन्मुहूर्तावलीनाम ॥ २२ ॥ नेत्रांभोधिधराधरक्षितिमिते १७४२ श्रीविक्रमार्के शके माघे मासि वसंतपंचमितिथौ चंद्रेऽथ मीनस्थिते॥ सूनुःश्रीहरिशंकरस्य विदुषः श्रौताहिताग्नेर्मुदा शीघ्रं शंकरपूजनाद्गणपतिर्ग्रंथं समापूरयत् ॥ २३ ॥ शिवधामान्वितो ग्रंथः प्रत्यर्थं सन्मुहूर्तदः ॥ भुवनेषु प्रसरतात्सौरालोक इवोदितः ॥ २४ ॥ आहिताग्नेर्द्विजश्रेष्ठाद्धरिशंकररावलात् ॥ जातो गणपतिश्चाहं समाप्य ग्रंथमुत्तमम् ॥ २५ ॥ निवेद्य चित्स्वरूपाय शिवाय प्रार्थये चिरम् ॥ वरदोऽयं शुभोऽभीष्टः सर्वत्र प्रसरत्विति ॥ २६ ॥

अब ग्रन्थकर्ताके कुलपरम्परावर्णन लिखतेहैं—गुर्जर देशमें रहनेवाले, ब्राह्मणकुलमें प्रतिष्ठित, सहस्रावदीचजातिके ब्राह्मण, शुभ शीलयुक्त, सकल राजाओंसे पूजित, लक्ष्मीसंपन्न, भारद्वाजके गोत्रमें उत्पन्न निर्मल यश फैलानेवाले, ब्रह्मज्ञानी, ब्रह्मर्षिशब्दसे विख्यात, रावलनामक श्रेष्ठपंडित इस प्रकारके हुए मानो ब्रह्मर्षिनामसे विख्यात गरिष्ठ दूसरे श्रीभगवान् वसिष्ठजीही थे ॥ ११ ॥ कुलरूपीचन्द्रमावाले, शरत्कालकी निर्मल चांदनीसी फैली हुई

कांतिप्रवाहके समुद्रमें श्रीरावलजीके ऐसे पुत्र उत्पन्न हुए कि, जिनके उत्तम यशोंसे दशोंदिशाएँ उज्ज्वल होगईथीं, जिनको सदैव हरिका दर्शन प्राप्त होताथा और पंडित लोग जिनको यशोधरनामसे बोलते थे ॥ १२ ॥ उन यशोधरजीके पुत्र रामदासजी ऐसे हुए कि, जो वेद वेदाङ्ग दर्शनशास्त्रोंके ( निवासस्थान ) जाननेवाले और जिन्होंने प्रश्नका पूरा समाचार बतादेनेसे सब राजाओंको अपने वशमें करलियाथा और राजाओंके मुकुटरत्नरूपी दीपकोंसे जिनका चरणमूल प्रकाशित रहताथा, बुढापेमें हरिभक्तिसे प्रसन्न होतेहुए काशीमें जायकर शरीर छूट जानेपर मुक्त होगये ॥ १३ ॥ उन रामदासजीके पुत्र हरिशंकरजी ऐसे हुए जैसे कि, समुद्रके चन्द्रमा प्रकाशवान् और अग्निहोत्री, सदैव शान्त, दान्त, उदारबुद्धि, अच्छा तप करनेसे उत्कृष्ट प्रभाववाले, ज्योतिषतत्त्व तथा आत्मतत्त्वके जाननेवाले और अद्वैत विचार करनेसे यथार्थनामके मुनिवर थे ॥ १४ ॥ ज्योतिष तथा वेदोंके जाननेवाले उन हरिशंकरजीका पुत्र गणपतिनामकने पिताकी प्रसन्नतासे यह मुहूर्त्तगणपति नामक ग्रन्थ बनायकर प्रीतिसे शिवजूके चरणोंमें अर्पण कियाहै ॥ १५ ॥ अनेक प्रकारके मुहूर्त्तसमूहोंका अधिपति होनेसे और कार्योंमें विघ्नोंके हरनेसे और गणपतिनामक ब्राह्मणका बनायाहुआ होनेसे अर्थात् इन तीन कारणोंसे गणेशजूके तुल्य यह मुहूर्त्तगणपतिनामक ग्रन्थ प्रकाशको प्राप्तहै ॥ १६ ॥ विद्या, लक्ष्मी, पुत्र, जय, अतिथि इन्होंसे पूर्ण कामनावाला और स्पष्ट योग, करण, अमृत, सिद्धि इन्होंसे सञ्चार करनेवाला यह मुहूर्त्तगणपतिनामक ग्रन्थ यज्ञोपवीत, विवाह, गृह, मङ्गल, मंडनादि कार्यामें पूज्य होताहुआ शोभाको प्राप्त होताहै ॥ १७ ॥ ज्योतिर्विदाभरण, सुन्दर वसन्तराज, ज्योतिर्निबन्ध, गणकमण्डन,

रत्नमाला, मुहूर्त्ततत्त्वदीप, मुहूर्तमार्त्तण्ड, मुहूर्त्तचिन्तामणि, मुहूर्त्तप्रभु, मुहूर्त्तकल्पद्रुम ॥ १८ ॥ इन ग्रन्थोंको सम्यग्विचारकर और सुकृती विद्वान् लोगोंका मत लेकरके प्रसिद्ध और सुगम हैं अर्थ तथा पद जिन्होंमें ऐसे श्लोकोंसे यह मुहूर्त्तगणपतिनामक ग्रन्थ बनायाहै. गुणज्ञ पुरुषोंको प्रीतिसे अपने चित्तरूपी स्थानमें इसका पूजन करना चाहिये ॥ १९ ॥ अच्छे शिष्योंपर दयावशसे इस ग्रन्थमें अन्य ग्रन्थान्तरोंका रहस्य वर्णन कियागयाहै. निंदक, कुटिल, नास्तिक तथा शुश्रूषारहित शिष्यके लिये इस ग्रन्थको कदापि नहीं देना चाहिये ॥ २० ॥ गणेशतुल्य इस गणपतिनामक ग्रन्थका चूड़ाकर्म आभूषण है और संवत्सरोंका वर्णन मुख है. सूर्यचन्द्रमा नेत्रहैं. दोनों अयन कुम्भस्थल हैं. बारह महीने कान और भुजाहैं. भगण, करण, योग, संक्रांति ये सब माला हैं. यज्ञोपवीत, विवाह, ये दोनों रत्नालंकार तथा वस्त्र हैं. अन्य मुहूर्त्त भौंरा तथा शुंड है. यात्राप्रकरण दाँत हैं और मिश्रप्रकरण कर्णफूल तथा दूर्वांकुरहै ॥ २१ ॥ तिथ्युत्पन्न विजययोग, आनंदयोग इत्यादिक योगही वारंवार प्रवृत्त होनेवाली सिद्धिहै. अग्न्याधान, यज्ञ, प्रतिष्ठा, जन्मविधि इतने मुहूर्त्तही महिमाहैं. नामकरण संस्कारही कांतिहै. वास्तुप्रकरणही प्रासादकी शोभाहै. वृष्टियोग, पातयोग, अपवादमुहूर्त्त येही सब तीक्ष्ण फरसा है. राज्याभिषेकप्रकरणही विख्यातिहै. शुभमुहूर्त्तावलियोंका यह (गणपति) गणेश विजयको प्राप्त है ॥ २२ ॥ विक्रमादित्यके सत्रहसौ बयालीस १७४२ संवत्, माघमास, वसंतपंचमीतिथि, मीनके चंद्रमामें अग्निहोत्री विद्वान् शंकरजीके पुत्र गणपतिने प्रीतिसे शंकरका पूजन करके शीघ्रही यह गणपतिनामक ग्रंथ संपूर्ण कियाहै ॥ २३ ॥ शिवजीके तेजसे युक्त प्रत्येक कार्यके शुभमुहूर्त्त देनेवाला

यह ग्रंथ भुवनोंमें इस प्रकारसे फैले जैसे कि, सूर्यके उदय होनेपर सूर्यका प्रकाश सकल भुवनोंमें फैलताहै ॥२४॥ अग्निहोत्री ब्राह्मणोंमें श्रेष्ठ जो हरिशंकररावलजी थे तिनसे मैं गणपति उत्पन्न हुआहूं इस उत्तम ग्रंथके समाप्त करके ॥२५॥ चित्स्वरूप शिवजूसे यह प्रार्थना करताहूँ कि, यह शुभग्रंथ वरदायक तथा अभीष्ट होकर सर्वत्र फैले २६॥

## अथ ग्रंथनिर्माणप्रयोजनांतरमप्याह ।

दानैर्विक्रमभोजकर्णनृपतीन्शौर्येण वेण्यार्जुनान्गांभीर्येण सरित्पतिं तुलयतो नीत्या सुराणां गुरुम् ॥ सेनान्यं बहुसैन्यपालनगुणैर्भक्त्या च गौरीपतेर्लक्ष्मीगमविभोर्विभाकररुचेः कोऽन्यस्तुलां रोहति ॥ २७ ॥ श्रीमद्रौडमनोहरक्षितिपतेः प्रीत्या प्रतीत्याऽधिकः काव्ये काव्यकलासुधर्मकुशलो यः सर्वशास्त्रार्थवित् ॥ तस्यासीदिति कौतुकेन विदुषां प्रीत्या पुरः प्रेरणाज्ज्योतिःशास्त्रविचारणाय सुगमग्रंथोऽनुसंधीयताम् ॥ २८ ॥ इति नृपतनयाशयं विदित्वा सपदि तदीयमनोविनोदनाय ॥ अथ विविधमुहूर्त्तसत्प्रबंधो गणपतिरावलशर्मणा व्यधायि ॥ २९ ॥ वाणी- यथा गणपतेः शिवयोगहेतुः काश्यां तथैव हरिशंकरनंदनस्य ॥ एषा मुहूर्त्तगणपत्यभिधप्रबंधप्रादुर्भवा भवतु भूमितले जनानाम् ॥ ३० ॥ आयुः प्रज्ञा यशः सौख्यं सौभाग्यं फलमक्षयम् ॥ अभीष्टं च पशून्पुत्राँल्लँभतां ग्रन्थतत्त्ववित् ॥ ३१ ॥

इति श्रीमदग्निहोत्रिचातुर्मास्ययाजिसमासादितपुरुषार्थसार्थदेवज्ञवर्यरावलहरिशंकरसूरिसूनुगणपतिकृते मुहूर्त्तगणपतौ ग्रंथालंकारप्रकरणं पञ्चविंशम् ॥ २५ ॥

अब ग्रंथनिर्म्माणप्रयोजनान्तरभी लिखतेहैं-दानोंके करनेसे विक्रमादित्य, भोजराज, कर्ण इतने राजाओंको और शूरतासे पृथु तथा अर्जुनकी, गंभीरतासे समुद्रकी और नीतिसे बृहस्पतिकी और बहुतसे योधाओंके पालन करनेके गुणोंसे तथा शिवजूकी भक्तिसे स्वर्गमें कार्त्तिकजीकी बराबरी करनेवाले, सूर्यकीसी कांतिवाले, लक्ष्मीरामजीकी तुलापर कौन पुरुष चढ सक्ताहै अर्थात् कोईभी बराबरी नहीं करसक्ताहै ॥ २७ ॥ उस श्रीमद्गौडदेशाधिपति मनोहरसिंहजूकी प्रीति और प्रतीतिसे काव्यसे अधिक तथा काव्यकला और सुधर्ममें कुशल और सर्वशास्त्रोंका जाननेवाला गणपति था इसी कौतुकसे विद्वानोंके सामने लक्ष्मीराम राजाके इसप्रकार प्रीतिपूर्वक प्रेरणा करनेसे कि, ज्योतिश्शास्त्रका विचारकरनेके अर्थ सुगम ग्रंथ बनाइये ॥ २८ ॥ राजकुमार लक्ष्मीरामजीका इस प्रकारका आशय समझकर शीघ्रही उनके मनोविनोदार्थ अनेक प्रकारके शुभमुहूर्त्तोंका ग्रंथ मुझ गणपति रावल शर्म्माने बनाया है ॥ २९ ॥ जिस प्रकार काशीजीमें गणपतिकी वाणी शिवयोगका कारणहै इसी प्रकार हरिशंकरजीके पुत्र गणपतिकी यह मुहूर्त्तगणपतिनामक प्रबंधसे प्रकट होनेवाली वाणी मनुष्योंके लिये पृथ्वीतलपर कल्याणकारिणी होवे ॥ ३० ॥ इस ग्रंथके तत्त्वका जाननेवाला पुरुष आयु, बुद्धि, यश, सौख्य, सौभाग्य, अक्षय फल, मनोरथ, पशु, पुत्र इन सब वस्तुओंको पावे ॥ ३१ ॥

इति श्रीमदग्निहोत्रिचातुर्मास्ययाजिसमासादितपुरुषार्थसारार्थदैवज्ञवर्य्यरावलहरिशंकरसूरिसूनुगणपतिकृते मुहूर्त्तगणपतौ पंडितरामदयालुशर्मकृतभाषाटीकासमलङ्कृतं ग्रथालंकारप्रकरणं पञ्चविंशम् ॥ २५ ॥

---

अथ टीकाकारकृतश्लोकाः ।

नृपतिविक्रमपङ्कजिनीपतेः शररसांकशशांकमितेऽब्दके ॥
सितदले मधुमासि कुमुद्वतीपतिदिने भुजगेंद्रतिथौ तथा ॥ १ ॥
गणपताविह सुन्दरभाषयाऽगमददस्तिलकं परिपूर्णताम् ॥
प्रणतिपूर्वकमर्थनमत्र मे इति बुधाः कृपया परिशोध्यताम् ॥ २ ॥
ग्रामेऽवसत्पंडितपूजितांघ्रिर्डौंडौलिसंज्ञे निगमागमज्ञः ॥
श्रीवेणिरामो निजपूर्णकामो गोविंदभक्त्या शुभमुक्तिमाप ॥ ३ ॥
तस्यात्मजो रामदयालुनामा गोविप्रवृन्दारकवृन्दवन्दी ॥
मौहूर्त्तिकेऽहं गणनाथसंज्ञे ग्रंथे च टीकां सरलां व्यधां वै ॥ ४ ॥

( सैवया )

श्रीनृप विक्रम संवत पांच रु छैनवएक १९६५ प्रमाण सुहावन ।
चैत्र सुदी तिथि पंचमि वार निशाकरको जगमें मनभावन ॥
ता दिन पूरन कीन तिलक सुहूरत ग्रंथ इसी परपावन ।
बालनको उपकार विचारि सुपंडित रामदयालु दया मन ॥ ५ ॥

दोहा

श्रीयुतसेठ सुपेठमें, जेठे ठाटसमेत ।
खेमराज राजत जगत, जीवनहेत सचेत ॥ ६ ॥
तिनकी आज्ञातें छप्यो, मुम्बैविच यह ग्रंथ ।
श्रीव्यंकटेश यंत्रमें, सुन्दर अक्षरपंथ ॥ ७ ॥

समाप्तोऽयं ग्रंथः ॥

---

पुस्तक मिलनेका ठिकाना—
खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" स्टीम् प्रेस,—बंबई.